अनुसन्धान-प्रकाशन-विभागीया

**त्रैमासिकी शोध-पत्रिका**

# शोध-प्रभा

**३३ वर्षे तृतीय-चतुर्थाङ्कौ ( जुलाई-अक्टूबरमासाङ्कौ ) २००८ ई०**

प्रधानसम्पादकः

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**



प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

प्रधानसम्पादकः

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

**सम्पादकः**

प्रो० रमेशकुमारपाण्डेयः

**सम्पादकमण्डलम्**

प्रो० (श्रीमती) अमिता शर्मा

प्रो० जयकान्तसिंहशर्मा

**मुद्रणसहायकः**

डॉ० ज्ञानधरपाठकः

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। तदर्थं द्वे प्रतिकृति प्रेषयितव्ये। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट, पोस्टल आर्डर अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

संस्कृतभाषा या माधुर्यप्रागल्भ्यनैसर्गिकात्वसौकर्यभावगाम्भीर्यादिगुणगरिम्णा अखिलेतरभाषाणां मूर्धाभिषिक्तत्वेन विराजते, तदस्या भाषायाः परिशीलनं मानवमात्रस्य परमो धर्मः। प्रकृत्यैवेयं भाषा यत्तदुपज्ञत्वेन स्वत्वेन वा यं कमपि देशविशेषं नानुबध्नाति, सम्बध्नाति चात्मीयत्वेनाखिलानेव देशान्। अत एवेयं देवभाषेति पदवीमारोपिता विद्वद्भिः, अत एव सर्व एव स्त्रियः पुरुषा वा साधिकारा अध्येतुमिमामिति। अद्यापि परः सहस्राः संस्कृतविद्वांसः रूसजर्मनफ्रांस–इङ्गलैण्ड–अमेरिका–पोलैण्डादिदेशेषु योरोपखण्डे विराजन्ते।

सर्वास्वपि तत्तेद्देशीयासु भाषासु च अद्यापि असङ्ख्याताः शब्दः विशुद्धसंस्कृता संस्कृतशब्दैः सह सादृश्यं जुषमाणस्तद्विकृतरूपा वा समुपलभ्यन्ते, इतस्ततः प्रसृताः संस्कृतभाषायां विश्वभाषाजननीत्वं साध्यन्तीति कस्याविदितम् अस्यां भाषायां ये ये धार्मिका राजनीतिकाः सामाजिका अर्थानुबधिनो वैज्ञानिकाश्च विषयाः, प्रणिबद्धाः सत्याहिंसापरस्वागृहनुतादयो मानवमात्रहितावहा वर्तन्ते, मन्यामहे, तेषां तलावगाहितया सम्यक् परिशीलनेन महानुपकारो जगतो भविष्यतीत्यस्माकं सुदृढो विवासः। अतः शान्तिसुधानिष्यन्दकरी अमन्दानन्दनिर्झरी संस्कृतभाषामाधुरीयं सर्वैः शान्ति–साम्राज्यस्थापनाकामैः विश्वैकात्म्यविधित्सुभिः सुधीभिः सर्वात्मना निषेव्या परिशीलनया च। यदबलम्क मानवजीवनस्य सौख्यं शान्तिः समृद्धिविश्वबधुत्वं वा पल्लवितं भवति तदखिलं ज्ञानविज्ञानं संस्कृतवाङ्मयमिदं सर्वोत्कर्षेण परिपूर्णतया च परामृशति। तदेतादृशस्य प्रेमःश्रेयः साधकस्य सर्वतोमुखप्रमुखज्ञेय–साधननिधानभूतस्यास्य साहित्यस्यापरिशीलनं नाम नूनं दैवदुर्विलसितमेव केवलमित्याकलयामो वयम्। अतो जगदिदं परितो सानन्दं शान्तिरसमारसयद् भूयोऽपि चतुरस्रतया समुल्लसत् भूयात्सर्ग–सादृश्यमादधानमिति।

परेशानुकम्पया तथाविद्यायास्तस्याः सुरभारत्या भव्यभावं ज्ञानसौरभं च क्रोडीकृत्य विलसन्तीयं शोधप्रभा विद्वज्जनानां शोधगर्भनिबन्धनिर्भरां करकमलमुपेतुमातुरेति प्रणिहितसामग्रीसौष्ठव–मासाद्य तदुद्भावकयत्नं सफलयन्तु सुधीजना इत्यावेदयते।

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

अद्यापि भारतीयपराम्परायां लिपेराविष्कार: कदा जात: इतिविषये विवदन्ते समीक्षका:। ब्रह्मणा कृता लिपि: ब्राह्मी अपि भारतीया लिपिर्नास्तीति पाश्चात्या: वदन्ति किन्तु भारतीया परम्परा इमामेव सर्वप्राचीनां लिपिं मत्वा भारतदेशे प्रचलितानां लिपीनां मूलं स्रोत: स्वीकरोति। वस्तुत: 'लिपि' शब्दोऽयं 'लिप् उपदेहे' धातो: 'इक् कृष्यादिभ्य:' इति सूत्राद् इक्प्रत्यययोगान्निष्पद्यते। फलत: लिप्यते इति लिपिरित्यर्थमेवाङ्गीकृत्य व्यवहारो दृश्यते। पूर्वस्मिन् काले काष्ठफलकादिकं सुधा-मसीप्रभृतिद्रव्यैरुपलिप्य अङ्गुलिभिर्नखैर्नडैर्वा वर्णानामाकृतिर्विधीयते स्म। 'लिपि' शब्दस्य प्रयोग: लेखनेऽप्यास्तीति मेदनीकोशस्य 'लेखा लिपि:' इतिवचनादवसीयते। 'लेखा' शब्द: लिख् विलखने धातो: निष्पद्यते। प्राचीनकाले काष्ठफलके, प्रस्तरे कार्पासे च लेखा: लिखिता: भवन्ति स्म। देवानां कृतेऽपि 'लेख' शब्दस्य प्रयोगो दृश्यते यतो हि प्राचीनकाले स्वीकृतानां देवानां विग्रहात्मिका रचना भित्तिषु लिखित्वैव क्रियते स्म। अद्यापि ग्रामाञ्चले विवाहादिकौतुकावसरे द्वारभित्तिषु गणेशगौरीविष्णुगजा-श्वस्वस्तिकशंखचक्रपद्ममत्स्यादीनां गैरिकादिभिर्लेखनं दृश्यते।

लिखिताक्षरविन्यास: लिपिरिति 'लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ' इत्यमरसिंहवचनात् सिद्ध्यते। लिखित: अक्षरविन्यासश्च लिपिशब्देन बोधित:। लिखित: अर्थात् उत्कीर्णित:। शिलालेखा: उत्कीर्णिता एव भवन्ति। किन्तु प्राचीनकाले ग्रन्थेषु अक्षरविन्यासात् पूर्वं पत्राणामुपरि लेपनमावश्यकमासीत्। भूर्जपत्राणामुपरि लेपविशेषं प्रथमम् उपलिप्य अक्षरविन्यासो विधीयते स्म। ताडपत्राणां लेखनात्पूर्वं शंखादिभि: घर्षयित्वा अक्षरविन्यासयोग्यता विधीयते स्म। एवमेव कार्पासकेष्वपि लेपनं कर्तव्यं भवति स्म। अनेन विवेचनेन स्पष्टं भवति यत् लेपनं लेखनम् उभयमपि परमावश्वयकमासीत् ग्रन्थनिर्माणे। फलत: कालान्तरे लिपि: लेखश्च शब्दौ समानार्थकौ सञ्जातौ। पाणिनिना कौटिल्येन च लिपिशब्द: प्रयुक्त: येन तस्मिन् काले लेखनप्रथाया: परिचयो जायते।

३३ वर्षे अङ्केस्मिन् विविधविषयविश्लेषपरा: षड्विंशतिलेखा: प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्-भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रिय: संवर्धनार्थमभ्यर्थते सुमनस: विदुष:।

**प्रो० रमेशकुमारपाण्डेय:**

सम्पादक:

# विषयानुक्रमणिका

## संस्कृतविभागः

## हिन्दी विभाग

# भट्टश्रीमथुरानाथशास्त्रिणां जीवनं साहित्यसेवा च

**देवर्षिः कलानाथशास्त्री**

*[भट्टश्रीमथुरानाथशास्त्रिणां साहित्यशास्त्रीयाः निबन्धाः शोधप्रभायां पूर्वमेव प्रकाशिताः सन्ति। तेषां सङ्कलनं पुस्तकाकारेण प्रकाशनीयमस्ति। तस्यैव ग्रन्थस्य प्रस्तावना-सामग्री निबन्धरूपेण अत्र प्रस्तूयते।]*

विंश्याः ख्रिष्टीयशताब्द्याः समुल्लेखनीयेषु संस्कृतविद्वत्स्वग्रण्यानां संस्कृतभाषायाः पत्रकारेषु प्रामुख्यमावहतां, 'संस्कृतरत्नाकर' सम्पादकानां, संस्कृतस्याधुनिके युगे गद्यलेखनेतिहासस्य युगपुरुषायमाणानां, संस्कृतकाव्यशैल्यां गजलगीतिप्रभृतिनूनतनविधानामवतारणेन युगान्तरवर्तकानां प्रकाव्यमत्पितृचरणानां कविशिरोमणिभट्टश्रीमथुरानाथशास्त्रिणां नामधेयं न कंचन परिचयमपेक्षते संस्कृतसाहित्याध्येतृषु। भट्टमहाभगैर्यथा गद्य-पद्यादि-सर्जनविधासु नवनवोन्मेषोत्थैश्चरणन्यासैः कीर्तिमानानि प्रत्यष्ठापिषत्, तथैव काव्यशास्त्रीये विमर्शेऽपि लेखनी व्यापारिता, ऐतिहासिकमहत्ताशालि लेखनं च विहितम्। पण्डितराज-जगन्नाथस्य शिखरगौरवशाली ग्रन्थो रसगंगाधरः सम्पादितो, व्याख्यातश्च। जगन्नाथेन सह तेऽभूतपूर्वां कांचनाऽऽत्मीयतामन्वभवन्निति स्फुटमधुना स्मरामि। प्रथमं त्वत्र कारणमभूज्जगन्नाथस्याऽऽन्ध्रा-भिजनोत्पन्नत्वम्। भट्टमहोदया अपि वेल्लानाडुपदवाच्याः आन्ध्रा अभूवन् ये तैलंगप्रदेशान् काश्यादिनगरेषु प्रवसतां, ततश्च ससम्मानं राजस्थानीयैर्बुन्दी जयपुरादिराजवंशैरुत्तरप्रदेशतो राजस्थाने समानाय्यन्ति वासिष्ठानां विदुषां वशे जनिमलभन्त, 'देवर्षि' इत्यवटङ्कभविभरुः। किञ्च भट्टमहाभागानां पूर्वजेषु कतिपये जगन्नाथस्य शिष्या अभूवन्। अपरं च जगन्नाथपंडितराज इव भट्टमहाभागा अपि शास्त्रवैदुष्यस्य च विविधभाषा विज्ञतायाश्च, सहैव काव्यरचनाया अपि प्रातिभोत्कर्षं युगपद् बहन्तस्तादृशीनां धारणां समन्वयमेव संस्कृतसाहित्यस्य चरमं पदं, स्पृहणीयं लक्ष्य, वास्तविकं गन्तव्यं चाऽऽमन्ति स्म। तेषां मते पण्डितराजस्य काव्यशास्त्रीयो विमर्शः शास्त्रास्य चरमुत्कर्षं प्रतिनिदधानोऽभूत्। अतएव बडौदाविश्वविद्यालयस्य प्राच्यविद्यासङ्कायेन स्वकीयायां विशिष्टभाषणमालायां काव्यशास्त्रीयं विमर्शमाधृत्य व्याख्यानद्वयं कर्तुं यदा भट्टमहोदयाः समामन्त्र्यन्त १९५६ ई. वत्सरे तदा तैः काव्यलक्षणं रसलक्षणं च स्वकीयव्यख्यानविषयत्वेन निरधार्यत, विशेषतः पण्डितराजीया दृष्टिश्च व्याख्यानद्वयेऽस्मिन्

प्रामुख्येनावलम्बनीया निरणीयत। तदानीं सुगृहीतनामधेया प्रो-हंसाबेनमेहता बडौदाविश्वविद्यालयस्य कुलपतिपदमलङ्कुर्वाणाऽभूत्, प्रो. भावे संस्कृतविभागाध्यक्षस्थोऽभूत्, प्रो. एच.पी.मेहता च प्राच्यमहाविद्यालयाध्यक्षोऽभवत् १९५६ ई वर्षे जनवरीमासस्य २३-२४ दिनाङ्कयोर्व्याख्यानद्वयं वटपत्तने भट्टमहाभागैः प्रस्तुतं तस्य च विषयोऽभूत् 'काव्यलक्षणं, रसलक्षणं च, पण्डितराजप्रदर्शितदिशा।''

वटपत्तने तेष्वेव दिवसेषु भट्टमहोदयानामाध्यक्ष्ये तत्रत्यानां संस्कृत-गुर्जरभाषा-हिन्दीकवीनां गोष्ठ्यप्येका समायोज्यत, ''देशविश्रुतः कविशिरोमणिर्यदि नगरे समुपस्थितस्तर्हि तस्य काव्यं कर्णगोचरीकर्तुं कोऽन्योऽवसरः समुपतिष्ठे'' दिति विचारयन्तीभिस्तन्नगरीयसंस्कृतसंस्थाभिः। तत्र भट्टमहोदयैः स्वकीया नीतिकविताऽपि श्राविता, भक्तिकविताऽपि, रसप्रवणा काव्यरचनाऽपि। तां श्रुत्वा बहुभिर्विद्वद्भिः परामृष्टं यत्तेषां विशिष्टभाषणयोरुदाहरणविधया तेषां रसप्रवणा नूत्ना काव्यरचनाऽपि प्रास्तोष्यत चेद् भाषणयोर्माधुरी समुपबृंहिताऽभविष्यत्। तदनु भट्टमहोदयैः प्रतिश्रुतं यद् भाषणद्वयमिदं तैः स्वकीयानि संकेतमात्रस्वरूपाणि समुटंकनानि विकीर्णानि च पत्राण्याधृत्यात्र प्रस्तुतमस्ति, यदा खल्वेनयोरालेखः सम्पादयिष्यते, तदा तत्तत्स्थलेषूदाहरणविधया स्वकीया नव्यसरणिसमनुवर्तिनी काव्यरचनाऽपि काचन समावेशयिष्यत इति। संयोगस्तादृशः समुपातिष्ठद् यद् वटपत्तनात् परावृत्य कार्यान्तरव्यापृतत्वादस्वस्थत्वाद् वा भट्टमहाभागा बडौदाविश्वविद्यालयीयप्राच्यविद्यासंकायकार्यालयेन स्वकीयैर्दशद्वादशभिरनुस्मारकपत्रैः स्मारिता अपि नाशक्नुवन् संपूरयितुमनयोर्व्याख्यानयोरालेखम्। एतत्परिणामोऽयमभूद् यत् तेषां व्याख्यानयोरालेखोऽप्राप्यमाणत्वान्ताऽपारयन् प्रकाशयितुं बडौदाविश्वविद्यालयेन।

परे वत्सरे तैरालेखः संपूरितः यद्यपि तादृशी सर्वाङ्गीणता तत्र नापर्यत सम्पादयितुं यादृशी तेषामभीष्टाऽभूद् यादृशं च स्वरूपं व्याख्यानयोरनयोरभूत्। तथाऽपि विषयवस्तुनः स्पष्टीकरणं स्वकीय-काव्यरचनया तदुदाहरणं चाऽत्र सुसम्पन्नम्। तथापि तैर्नायमालेखः प्राहीयत विश्वविद्यालये। तथैव तत्सविधेऽयमस्थात्। समुपस्थिते समुपयुक्ते समये प्रकाशनमस्य काव्यशास्त्रीयनिबंधसंकलनत्वेन विधास्यत इति धिया। साम्प्रतमिदं व्याख्यानद्वयमस्मिन् सङ्कलने समुपतिष्ठते भवतां करसरसीरुहयोः। ''काव्यलक्षणं तद्विषये विभिन्नमतानि च'' इति प्रथमस्य शीर्षकम् ''रसस्वरूपं विभिन्ना रससिद्धान्ताश्चेत्यपरस्य। एनाभ्यां सहैव ''विक्रमार्कचरित'' महाकाव्यप्रणेतारं काश्मीरकं बिल्हणकविमवलम्ब्य विलिखितो निबन्धोऽपि प्रकाश्यते।

'राजतरङ्गिणी' कारः कल्हण ऐतिहासिकमहाकाव्यप्रणेतृत्वेन सुविदतो विश्वस्मिन् संस्कृतजगति। तादृश एव वशीकृतवागैतिहासिकमहाकाव्यप्रणेता काश्मीरको बिल्हणोंऽप्यभूत् किन्तु तस्य परिज्ञानं नाऽभूद् विगतशताब्दीषु संस्कृतसाहित्येतिहासकाराणाम्। तस्य महाकाव्यं विक्रमार्कचारिताख्यं राजस्थाने जैसलमेरनगरीये ग्रन्थागारे प्राचीनपाण्डुलिपिषु बहोः काला-निलीनमासीत्। बूहकर-जैकोबीत्याख्यशार्मण्य विद्वद्द्वयेन पाण्डुलिपिरन्वेषयता यद्यऽत्र तदिदं प्राप्यत, तदारभ्यास्य कीर्तिकौमुदीप्रासरत्समस्तेऽपि देशे। मूर्धन्येषु महाकाव्येष्वस्य परिगणना तूर्णमेव कर्तुमारब्धा समीक्षकैः। विभिन्नविश्वविद्यालयीय पाठ्यचर्या-

स्विदं नियतीकृतं शिक्षाविद्भिः पाठ्यग्रन्थरूपेण। राजस्थानराज्यस्य संघटनान्तरं साहित्यशास्त्रि-साहित्याचार्यादिसंस्कृतपरीक्षाः (याः पूर्वं जयपुरीयमहाराजसंस्कृतकालेजीयपरीक्षा इत्याख्यायन्त) प्राच्यपरीक्षाविभागेन राजस्थानसर्वकारीयेण परिचालयितुमारब्धाः। तत्र च साहित्याचार्यपरीक्षायामिदं महाकाव्यं ''विक्रमाङ्कदेवचरितं'' पाठ्यचर्या निरधार्यत। तदानीं महाकाव्यस्यास्य मूलमात्रमासीन्मुद्रितं, तदेवापाढ्यत पण्डितैः। महाकाव्यस्यास्य साहित्यिकं मूल्यांकनं, सर्वाङ्गीणा समीक्षा, लेखकपरिचय इत्यादि नाभूत्सुलभम्। सर्वमेतत्प्रणेतुं भट्टमहाभागा अनुरुद्धा विभागाधिकारिभिः। भट्टमहोदयाना-मेनामान्वीक्षिकीं भूमिकारूपेण मुद्रापयित्वा पाठ्यपुस्तकत्वेन महाकाव्यमपीदं मुद्रापयिष्यते येन च्छात्राणां सौकर्यं भवेदित्यासीत्तेषां हार्दम्।

अनुरोधमिमं पूरयितुं बिल्हणमहाकवेः परिचयं, तत्काव्यस्य महत्त्वं, काव्यशास्त्रीयं मूल्यांकनं, काव्यस्य, विषयवस्तु, शैली इत्यादि सर्वं समीक्षमाणैर्यः समालोचनात्मको निबन्धो व्यलेलिखत स तैर्न प्राहीयत विभागाय यतो हि तेष्वेव दिनेषु सभूमिकं, सटिप्पणीकं च ''विक्रमाङ्कदेवचरितस्य'' संस्करणमेकं प्राकाश्यत येन परीक्षार्थिनामपेक्षापूर्तिः समजाययत। एतस्य कियानंशो मया साहित्य अकादमी (उदयपुर) संस्थया प्रकाश्यमानायां मत्संपादितायां स्वरमङ्गलाख्य त्रैमासिकपत्रिकायां प्रकाश्यत १९७८ ई. वत्सरे। समग्रस्त्वयं निबन्धः प्रकाशनापेक्षी मत्सविधेऽस्थान्। अत्र हि बिल्हणस्य, विक्रमाङ्कचरितमहाकाव्यस्य च सर्वाङ्गीणा, सोदाहरणा, सटिप्पणीका च समीक्षा प्राप्येत पाठकैरित्यस्यापि प्रकाशनं समर्थ्येत सहृदयैरित्याशासे।

आपाततोऽवलोकयन्तोऽपि सुधियो द्रक्ष्यन्त्येषु निबन्धेषु तत्प्रणेतुर्विशिष्टं किञ्चिदुद्देश्यम्। सामान्यतः काव्यलक्षणस्य रसलक्षणस्य च कियन्महत्त्वं साहित्यशास्त्रीयच्छात्राणां कृतेऽस्तीति विदन्त्येव विज्ञाः। सोऽयं च विषयो न्यायादिशास्त्रसरण्या प्रतिपाद्यमानो बहुधा जटिलतामावहति, छात्राश्च वास्तविकं तत्स्वरूपं पारयन्ति बौद्धमित्यस्य काठिन्यस्य परिहारस्तु लेखकस्योद्देश्यमस्त्येव, सहैव तस्यायमप्याशयोऽस्ति यत्साहित्यशास्त्रस्यार्वाचीनतमः प्रौढतमश्चार्यो जगन्नाथोऽस्ति, तत्प्रतिपादनं चापि नव्यन्यायशैलीनिबद्धत्वाद्यत् काठिन्यमावहति, तस्य निराकरणं भवेत्, अपरतश्च काव्यलक्षणस्य सार्थकता न केवलं संस्कृत-काव्यसंदर्भेष्वेव प्रकटीभवेदपि तु भाषान्तराणां काव्यान्यपि तेन लक्षणेन लक्षणीयानि सिध्येरन्। ''तददोषौ शब्दार्थौ'' इत्यादीनि लक्षणानि दोष-गुणालंकारादिः संस्कृतकाव्यशास्त्रस्य परिभाषिकी संज्ञाः प्रयुञ्जन्ति न संघटेरन्नन्यासु भाषासु। रसात्मकं वाक्यं, रमणीयार्थप्रतिपादकः शब्दः इत्यादीनि लक्षणान्यवश्यमेव सर्वभाषासाधारणानीति वक्तुं शक्यते। अतो व्यापके सन्दर्भफलके तानि प्रयोज्येरन्निति दिशं स्पष्टीकुर्वाणो लेखको नवीनां कांचन दृशमपि प्रमाणयति संकेतमात्रं प्रहिण्वन्नपि।

एवमेव रसलक्षणेऽपि विभावानुभावव्यभिचार्यादि पारिभाषिकसंज्ञासन्दोहसंदृब्धं लक्षणं तेषामेव हृदयङ्गमं स्याद् ये संस्कृतस्य पारिभाषिकीरिमाः संज्ञाः पूर्वं विदांकुर्वन्ति। नेदं लक्षणं यथावदन्यभाषासु घटयितुं सुशकम्। किं च रसानुभूतिः केवलं काव्ये एव भवति, नान्यासु संगीत-नृत्य-चित्रप्रभृतिकलास्विति

न कोऽपि मन्येत। तर्हि तादृशमेव किंचन लक्षणं व्यापकत्वमावहेद् यदन्यासु कलास्वपि घटेत। केषामाचार्याणां तादृशी दृष्टिरभूत्, कथं च तेषां लक्षणानि तादृशे व्यापके फलके चारितार्थयितुं शक्यानीत्यपि संकेतयता लेखकेन भाविनां विमर्शकानां कृते नूतना दिश आलोकिता इत्यनुभविष्यन्ति सूक्ष्मेक्षिकाचणा विचक्षणा निबन्धेष्वेष्वित्याशासे।

मत्पितृचरणानां भट्टश्रीमथुरानाथशास्त्रिणां भाषाशैल्यां सेयं प्रवृत्तिर्मया बहुत्र प्रत्यक्षीकृता यत्ते स्फुटावबोधकत्वं, समर्थकत्वं च भाषायाः प्रमुखं गुणममन्यन्त यदद्य ''संप्रेषणीयता'' पदेन हिन्द्यादिभाषास्वभिधीयते। अनावश्यकः शब्दाडम्बरो जटिलता वा न तैरिभरोचिता कदापि। बहुत्र तु स्पष्टावबोधकताया व्याकरणशुद्धेश्च तुलनायामुपस्थितायां ते स्पष्टावबोधकतां स्पृहणीयतराममन्यन्त। यथा सन्धेः स्थलेषु। ''संहितैकपदे नित्या'', ''नित्या समासे'' इत्यादि सुविदितमेव समेषाम्। किन्तु संहितासिद्धान्तमिममादृत्य यदि ''श्रीअटलबिहारी'' ति पदं ''श्र्यटलविहारीत्वेत परिवर्त्येन कः स्यात् परिणामः विभिन्नानां प्रवर्ग्याणां परिगणनमुद्दिश्य यदि विलिख्यते किंचित्, अथवा ज्योतिषायुर्वेदोपनिषदादीनां परिज्ञान'' मित्यादि संप्रेषयितुमिष्यते तर्हि सुखावबोधाय सन्धिविच्छेदो वा अवलम्बनीयः, सन्धिविरहितानि वा पदानि लेख्यानि ''ज्यौतिषम्, आयुर्वेदः, उपनिषदः, अथवा ''ज्यौतिष-आयुर्वेद-उपनिषदः ''इत्यादि इति तेऽसकृज्जगदुः। अत्र हि परस्मिन् शब्दपुंजे ''नित्यासमासे'' इति नियमस्योल्लंघनमवश्यं जायते किन्तु सुखावबोधानुरोधः, संप्रेषणीयताया अपेक्षा चावश्यं पूर्यते। द्वन्द्वसमासेऽभीष्टेऽपि ''हिन्दी-उर्दू-असमी-भाषाविदः'' इति पदं सुबोधं स्यादुत'' हिन्द्युर्दूसमीभाषाविदः'' इति स्वयं पर्यालोचयन्तु सुधियः। अतः संहितासिद्धान्तान् साधु विदन्तोऽपि ते बहुधा (विशेषतस्तु व्याख्यानेषु) समस्तपदेष्वपि सन्धिविच्छेदं विधायैव परिगणनीयान् प्रवर्ग्यानाहुः। पूर्वस्मिन् व्याख्यानद्वये वाचिकसम्प्रेषणोद्देश्यकत्वात्सेयं सरणिर्बहुत्र प्राप्येत। न तत्र विमनायितव्यं विद्वद्भिः। प्रथमायामेव पंक्तौ वेदोपनिषत्स्मृत्यादीनि वक्तव्ये "वेद-उपनिषत्-स्मृति'' इत्यादि ते विलिखन्ति। सुखावबोधमुद्दिश्यान्यत्रापि परिभाषिकीणां संज्ञानां स्थाने सरलानि पदानि ते प्रयुञ्जन्ति। यतोहि च्छात्राणां कृते व्याख्यानानि सुबोधानि स्युर्न जटिलानीति तेषां मान्यताऽभूत्।

कैशोरे यौवने च तेऽपि शास्त्रीयां, प्रौढां, पाण्डित्यद्रढिमद्योतिनीं समस्तपदघटितां च शैलीमाश्रयन्ति स्म। कथयन्ति स्म ते प्रायशो यद्युवानो नूतनाश्च विद्वांसः स्वकीयं प्रौढपाण्डित्यं प्रकटयितुं दृढां, जटिलां प्रौढिमप्रकर्षपरां च भाषां यद् विलिखन्ति, नैसर्गिकं तत्तेषां चिन्तनं सरलां भाषां विलिखितो विदुषः प्रायशो जनाः साधारणपंडितान् मन्यन्ते, कठिनां भाषां विलिखतः पंडितांस्तूत्कृष्टान् मन्यन्ते। अतः प्रारम्भे पांडित्यं प्रथयितुं तादृशी भाषा, शैली च यदि विलिख्यते, स्वाभाविकी सा प्रवृत्तिः, स्वगतार्हा च सा । प्रथिते च पाण्डित्ये, अधिगते चास्पदे, स्थिरीभूतायां च प्रतिष्ठायां तु तादृशी भाषा विलिख्येत या त्वरितमार्थावबोधं कारयेत्। तेनैव पाठकानां हितं सेत्स्यति। इममेव सुखावबोधमनुरुध्यासकृत्ते हिन्दीभाषासहजानां तादृशानामपि पदानां प्रयोगमकार्षुर्ये संस्कृतेऽशास्त्रीया इति वक्तुं शक्यन्ते (यथा

''शब्दार्थयोर्मध्ये चमत्कारोत्पादनार्थमि'' त्यादि यतो हि शब्दार्थयोरधिकरणत्वेन विवक्षायामपि 'शब्दार्थयोश्चमत्कारोत्पादनार्थमित्युक्ते षष्ठीं विद्यात् पाठक इत्याशंका तेषामभूत्)

आधुनिके युगे संस्कृतगद्यलेखने नूत्न-नूत्नासु विधासु सर्जनात्मकं लेखनं विधाय, अन्यांश्च लेखकान् नवविधासु लेखनाय प्रोत्साहय्य भट्टमहाभागैर्नूतनं युगमेव प्रवर्तितमासीदिति विदन्त्येव विपश्चितः। लघुकथानां विविधान् प्रकारान्, उपन्यासान् निबन्धानां दशाधिकान् प्रकारान्, यात्रावृत्तानि, स्थलवृत्तानि, विनोदवार्ताः, व्यंग्यलेखान्, इत्येवमनेकान् गद्यप्रभेदान् संस्कृतेऽवतार्य गीर्वाणगिरोऽजरत्वख्यापनं तैः कृतमभूत्। निबन्धलेखनसिद्धान्तान् संकलय्य, जिज्ञासूनां सौविध्याय निबन्धलेखनपद्धतिस्तैरनुशिष्टाऽभूत्, ततश्च वर्णनात्मका, विचारात्मकाः, रूपकात्मकाः, निरूपणात्मकाश्च निबन्धाः, ललितनिबन्धा इत्यादयो विविधप्रकारका ये निबन्धास्तत्प्रसंगेषु तैर्लिखिता अभूवंस्तान् प्रतिनिधिरूपेण संकलय्य तान् निबन्धलेखनविधिना सह प्रस्तूय'' प्रबन्धपारिजात'' शीर्षकवहो ग्रन्थ एको मया संपादितोऽभूद् यो जयपुरीयेण केन्द्रीयसंस्कृतविद्यापीठेन १९८७ वत्सरे प्रकाशितोऽपि। तत्र खल्वनुसन्धानात्मका अपि कतिपये निबन्धा अभूवन् (नासाभूषणं कदा मनुते प्रवृत्तम् इति-विषयकः शोधलेखः) किन्तु शास्त्रीयविषयप्रतिपादका निबन्धास्तत्र न समावेश्यन्त। तत्र ''चमत्कारत्मको निबन्ध'' इत्याख्ययाऽभूतपूर्वा काचन नवीनविधाऽप्यासीदिति स्मरेयुर्बुधा यस्यां प्रत्येकं पदं 'मकारेण प्रारभ्यत, कथानकं चापि यत्र सुबोधमभूत्, निबन्धस्य रुचिकरो विषयोऽप्यपूर्यत ('मकारमहामेलकम्' शीर्षको निबन्धः)। तत्र शास्त्रविशेषगतस्य विषयविशेषस्य प्रतिपादकानां निबन्धानां संकलनाभावजनिता या त्रुटिरभूत् सा साम्प्रतं निराक्रियते काव्यशास्त्रीयान् विषयान् प्रतिपादयतो निबन्धानत्र संकलय्य।

**वंशः पूर्वजाश्च**

भट्टश्रीमथुरानाथशास्त्रिणो जन्म राजस्थान-वासिनाम् उत्तर-भारते निवसतामान्ध्राभिजनानां विद्वद्ब्राह्मणानां कुले जयपुरेऽभूत्। प्रायश्चतुष्पञ्चशताब्दीतः पूर्वं विभिन्नैर्हेतुभिर्दक्षिणदिग्देशाद् बहूनि विद्वत्कुलानि सामूहिकरूपेणोत्तरभारतं प्रति प्रव्रजनमत्र विभिन्नेषु प्रान्तेषु प्रवासं च प्रारेभिरे। वल्लभाचार्यप्रभृतीनां वैष्णवाचार्याणां भक्तिधारा-प्रवाह-प्रचारोद्देश्यकेषु प्रवासेषु, वाराणस्यादि-विद्याकेन्द्रेषु शास्त्रार्थाद्युद्देश्यकेषु पर्यटनेषु, च सहचारित्वमापन्नानि बहूनि ब्राह्मणकुलानि समागच्छन्नुत्तर-भारते, अत्र च राजसंमानादिना प्रश्रयं प्राप्य स्थायिरूपेण निवासं चक्रिरे। स्वयं वल्लभाचार्य आन्ध्राभिजनोऽभूदुत्तरभारते च न्यवसत्। एवंविध एव तैलंगब्राह्मणानां कृष्णयजुर्वेदान्तर्गततैत्तरीयशाखाध्यायिनां वंश एको मांगेलमाले आन्ध्रप्रदेशादुत्तर-भारते समाययौ यस्य मूलपुरुषो बावीजी दीक्षितोऽभूत्। आंगिरस-आयास्यगौतमेति त्रिप्रवरान्विते। गौतमसगोत्रे वंशेऽस्मिन् बहवः परिनिष्ठिता विद्वांसोऽभूवन्। 'देवर्षि' इति अवटङ्कधरोऽयं वंशो देवलपल्ली 'देवरकोंड' इत्याख्याद् वा प्रदेशान्निर्गत इति बहूनां धारणा, अत एव संस्कृत्य 'देवर्षि' इत्यभिजनाभिधानं समभूत् इति तेषामाशयः। अन्ये तु दक्षिणभारतात् काशीं, काशीतः प्रयागं, प्रयागाद् रीवां नगरं च गत्वा तत्र राजसंमानस्वरूपं 'दविरिखिया' इत्याख्यं ग्रामं बान्धवनरेशाद्

गोपालसिंहात् प्रापत् पूर्वपुरुषो मंडलदीक्षित इति तमिमं ग्रामं व्यपदिश्य संस्कृतं नाम 'देवर्षि' इत्यवटङ्कस्य समभूदिति कथयन्ति।

भवतु तावत्किमपि कारणं, किन्तु देवर्षि इत्यवटङ्कधरोऽयं परिवारः काश्यां, प्रयागे, रीवांनगरे, अनूपशहरे च निवासं विधाय कवित्वख्यातिवशाद् विभिन्नै राजवंशैः कुलपरम्परया संमानितो राजस्थानप्रान्ते बुन्दीनगरं प्राप यत्र ग्रामादि-संपत्ति-प्रदानसंमानेन वासितः। बुन्दीपतेर्बुधसिंहस्य राजसभाया रत्नं देवर्षिश्रीकृष्णभट्टः कविकलानिधिः संस्कृत-प्राकृतापभ्रंशव्रजभाषादीनां तलस्पर्शी विद्वान् विश्रुतः कविरलंकारशास्त्री चाऽभूद् यस्यैतिहासिकानि 'ईश्वरविलास' प्रभृतिकाव्यानि, 'पद्य-मुक्तावली' प्रभृति मुक्तकसंग्रहाः, 'वृत्तमुक्तावली' प्रभृति छन्दःशास्त्रग्रन्थाः संस्कृते; 'अलंकारकलानिधि', 'शृंगाररसमाधुरी' प्रभृतयो रीतिग्रन्थाश्च ब्रजभाषायां प्रकाशिताः। प्रायो विंशतितोऽप्यधिका रचना अप्रकाशिता विविधेषु ग्रन्थागारेषूपलभ्यन्ते।

सोऽयं श्रीकृष्णभट्टो बुन्दीपतेर्बुधसिंहस्य राजसभातो (बुन्दीनरेशाद् याचनापुरःसरं) जयपुरनरेशेन तत्संस्थापकेन सवाईजयसिंहेनाऽऽनीतस्तेनानुष्ठितेऽश्वमेधमखे सक्रियां भूमिकां निरवहत्, राजाज्ञया बहून् ग्रन्थांश्च प्रणिनाय। सवाईजयसिंहेन 'कविकलानिधि' रित्युपाधिना संमानितः सोऽयं मनीषी जयपुरनगरे एव सप्तदश्यां शताब्द्यां (१६७५-१७६१ ई.) जयपुरे स्थायिरूपेण प्रत्यष्ठिपत् स्वकीयं परिवारम्। तदनु वंशेऽस्मिन् बहवो विद्वत्कवयः समभूवन् येषु श्रीकृष्णभट्टतनयो बाणो भारतीत्याधुपनामधारी श्रीद्वारकानाथभट्टः संस्कृत-व्रजभाषादीनां विख्यातः कविरासीत्। जगदीशभट्ट-वासुदेवभट्ट-मण्डनभट्टादयो बहवो वंशजा अस्य राजकवयो मनीषिणो लेखकाश्चाभूवन्।

**शिक्षा**-मण्डनभट्टो जयपुरराजवंशेन प्रभूतं संमानितः कविरासीत्। अस्यैव कुले श्रीलक्ष्मीनाथ-भट्ट-सुतस्य श्रीद्वारकानाथभट्टस्य पत्नी श्रीजानकीदेवी मथुरानाथं संवत् १९४६ वैक्रमे वर्षे आषाढकृष्ण-सप्तम्यां (१८८९ ई.) प्रासौत्। एतत्पिता द्वारकानाथभट्टः सांसारिकव्यवहारविमुखः आध्यात्मिक-प्रवृत्तिपरः श्रीमद्भागवतादिवाचने जप-पूजादिषु चाधिकां रुचिमन्वभूत्। पितामहः श्रीलक्ष्मीनाथ एव परिवारे प्रबन्धादिषु प्रमुखोऽभूत्। संस्कृत-वैदुष्यपरम्परापरिपूतेऽप्यस्मिन् कुले 'राजवृत्ति-संमानादि (तदानीन्तन)-राजभाषायामुर्दूभाषायामधिकं लभ्यते" इति धारणाऽऽसीत् अतः शिशोर्मथुरानाथस्य शिक्षा उर्दूभाषायां भवतु येन सोऽयं न्यायालयादिषु संमानितं किंचित्पदमधिगच्छेदित्यासीदेतत्पितामहस्य वाञ्छा। किन्तु स्वाभाविकी रुचिरस्य शिशोः संस्कृतेऽभूत्। एवं च यत्किञ्चिदुर्दूभाषां पठित्वा कुलपरम्परापरिगतानि संस्कृत-पुस्तकान्यनेन रुचिवशात् पठितुमारब्धानि। तदनु प्राथमिककक्षासु शिक्षायै सोऽयं जयपुरीये महाराज-संस्कृत-कॉलेजे प्रवेशितः।

तत्र प्रवेशिकाध्यापकैः पं. काशीनाथशास्त्रिप्रभृतिभिः संस्कृतव्याकरणे लघुकौमुद्यादिषु भृशं सपरिश्रममध्यापितोऽसौ स्वल्पीयस्येव वयसि प्रवेशिकापरीक्षायामार्हन्तीं प्राप्तवन्तमेनं साहित्य-न्याय-

व्याकरणेति शास्त्रत्रयस्य विद्वांसोऽध्यापकाः स्व-स्वविषयं पठितुं प्रैरिरन्। बहुविध-विचारानन्तरं निर्धारितं यदयं साहित्य-व्याकरणेतिशास्त्रद्वयं समकालमेव पठतु। तदानीं विषयविभाजनं, परीक्षाप्रणाली च नूत्नतया प्रवर्तिताऽभूत् कतिपयवर्षपूर्वमेवेति कठोरा अभूवन् नियमास्तथापि तत्कालीनेन शिक्षासंचालकेन श्रीसजीवनगंगोपाध्यायेन विषयद्वयं पठितुं विशेषानुमतिरस्मै प्रदत्ता। साहित्याध्यापकाः नांगल्याभिजनाः श्रीगोपीनाथदाधीचाः व्याकरणाध्यापकाः राजगुरुहरिदत्तझामहाभागाश्चाभूवन्नस्याध्यापकाः। सोऽयं साहित्योपाध्याय-परीक्षां १९०१ वर्षे व्याकरणोपाध्यायपरीक्षां च १९०३ ई. वर्षे समुदतरत्। साहित्यव्याकरणयोः प्रत्येकं वर्षत्रयव्यापी सोऽयं पाठ्यक्रमो वर्षषट्कमग्रहीष्यत्, विशेषानुमतिर्यदि नाऽलक्ष्यत्।

तदनु व्याकरणशास्त्रिपरीक्षाऽनेन सर्वप्राथम्यं लब्ध्वा प्रथमश्रेण्या १९०७ ई. वत्सरे समुत्तीर्णा महाभाष्य-शेखर-मनोरमादि विमर्श-ग्रन्थेषु सुबहुपरिश्रम्य कालेजाध्यक्षाणां पं. लक्ष्मीनाथशास्त्रिणां शिष्यत्वे, न केवलं कॉलेजे एव, अपितु तेषां गृहेऽपि निन्तरमध्ययनेनानेका रात्रीरतिबाह्य, कष्टशतं सोढ्वा, गृहावाससुखानि परित्यज्य च 'गुरुकुलक्लिष्टेन' छात्रेणानेन सप्रशंसमस्यां परीक्षायां साफल्यं लब्धमभूत्। काशीस्था म.म. पं. शिवकुमारमिश्रप्रभृतयो भारतविश्रुता विद्वांसस्तदा परीक्षका अभूवन्। आसीत्तदा सेयं परिपाटी यत्प्रौढिम्नः पूर्णतः परीक्षिका-स्वमूषु परीक्षासु ससंमानमुत्तरतां परीक्षार्थिनां प्रमाणपत्रेषु परीक्षकाः स्वहस्ताक्षराण्यकुर्वन् बहुधा च स्वकीयान्यभिमतान्यपि व्यलिखन्। एतस्य प्रमाणपत्रे परीक्षकेण "लेखपटुरयं बटुः" इति टिप्पणी प्रत्ताऽभूत्।

एतस्मात् पूर्वं १९०६ ई. वत्सरे पंजाब-विश्वविद्यालयीयायां सर्वोच्चायां शास्त्रिपरीक्षायामयं प्रथमश्रेण्यां सर्वस्मिन्नपि विश्वविद्यालये प्राथम्यमलभत। १९०९ ई. वर्षे पं. श्रीकृष्णशास्त्रिद्राविडस्य शिष्यरूपेणायं महाराजसंस्कृत-कॉलेजीयछात्रत्वेन साहित्याचार्य-परीक्षायां साफल्यमभजत्। समीक्षा-चक्रवर्ति-श्रीमधुसूदन ओझामहाभागादप्ययं वेद-ब्राह्मणोपनिषद्दर्शनग्रन्थानध्यगीष्ट।

अध्ययन-समकालमेव संपादनस्य साहित्यरचनायाश्च या प्रवृत्तिरस्मिन् परिलक्षिताऽभूत्तां विशदीकृत्य साहित्यसर्जनाया या भागीरथीभट्टमहोदयेन अजस्रं प्रवाहिता तस्याः परिचयोऽनुपदमेव प्रदीयेत। अत्र तज्जीवनयात्रायाः संक्षिप्तमितिवृत्तमुल्लिख्यते पूर्वम्। सुन्दरलालभट्टस्य राजसंमानिते ग्राम-सम्पत्ति-स्वामिनि चाधिष्ठाने उत्तराधिकारित्वेन सुन्दरलालभट्टेन दत्तकपुत्रत्वेन गृहीतः सोऽयं भूसम्पात्तेः प्रबंधं, प्रतिष्ठानोपरि यद् ऋणमुपचितमभूत्तस्य परिशोधनं च कृत्वा वित्तीयां स्थितिं दाढर्यं नीतवान्। ओरछा- (मध्यप्रदेश) राजगुरोः श्रीरघुनाथदेव दाऊजू महाभागस्य सुतया सावित्रीदेव्या सहाऽस्य विवाहः १९०१ ई. वत्सरे समजायत। तिस्रः सन्ततयोऽपि समभूवन् किन्तु शैशव एव निधनं प्रयाताः। ततोऽजयगढ़ (मध्यप्रदेश) स्थस्य पं. नारायणरावस्य पुत्र्या मथुरादेव्याः पाणिग्रहणमनेन कृतं किन्तु कालगत्या मथुरादेवी वर्षावधावेव स्वर्गमारूढा। तदनु १९२२ ई. वत्सरे जयपुरसंनिकटस्थस्य महापुराग्रामस्य निवासिनः पं. शिवानन्द-गोस्वामिवं-राजस्य पं. श्री गोपीकृष्णगोस्वामिनः सुतया रामादेव्या सहाऽस्य विवाहः समजायत। विवाहबन्धनमिदं चिरस्थायि प्रतिपन्नम्। १९३४ ई. वर्षे कलानाथनामानं

सुतं, १९३७ वर्षे जयानाम्नीं कन्यां १९४० वर्षे विजयानाम्नीं कन्या, १९४५ वर्षे च कमलानाथनामानं सुतमियं रामादेवी प्रासौत्।

**अध्यापनं राज्यसेवा च**–साहित्याचार्य-परीक्षामुत्तीर्य महाराजसंस्कृतकालेजे प्राध्याकपदे सेवामारब्धुमयं प्रोत्साहितो वयस्यैः। संस्कृतरत्नाकरादि-मासिकपत्रेषु लेखकत्वेन सम्पादकत्वेन चास्य साहित्यसेवा तदानीं प्रसिद्धिं प्रारभमाणाऽभूत्। प्रतिभाऽप्यस्य सुविदिताऽऽसीत् किन्तु तदानीन्तनेन महाराज-संस्कृतकालेजाध्यक्षेण महामहोपाध्याय पं. दुर्गाप्रसादद्विवेदेन पं. गोपीनाथधर्माधिकारिनामा विद्वानेकः प्राध्यापक-पदे नियुयुजे। एवं हि कालेजस्यास्य सेवापराङ्मुखोऽयं संस्कृतहिन्द्यादिभाषासु काव्यादिरचनां कृत्वा हिन्दी-संस्कृताध्येतृन् स्वगृहेऽध्याप्य च साहित्यजगतः शिक्षाजगतश्च सेवां कर्तुमारेभे।

भूसम्पत्तेः स्वामी राजसंमानित-प्रतिष्ठानस्य चोत्तराधिकारी सोऽयमभूदिति कृत्वा नैवंविधानां तदानीन्तनानां विदुषां सम्मुखे आजीविकायास्तादृशी समस्याऽभूत्।

तदैव १९२४ ई. वर्षे जयपुरमहाराजस्य श्रीमानसिंहस्य प्रथमो विवाहमहोत्सवो जोधपुर-नगरे समायोजितोऽभूत्। समारोहेऽस्मिन् सोऽयं तत्र सङ्गतेन तत्कालीन-शिक्षा संचालकेन श्रीश्यामसुन्दरशर्मणा (यो ह्यस्याभिन्नं मित्रं परस्तात् समजायत, यश्चैतस्य मृत्योर्दिनद्वयात् पूर्वमेव दिवमारूढः) समनुरुद्धो यत्संस्कृतकालेजे साहित्याध्यापकपदमयं स्वीकुर्यादिति। एतत्फलस्वरूपं २६।१।२४ दिवसेऽयं म.म. दुर्गाप्रसादद्विवेदानामध्यक्षत्वकाले एव तत्राऽध्यापकपदं जग्राह। तदानीं जयपुरे आंग्लशिक्षापद्धत्यनुसारं सामान्यशिक्षा-प्रकारस्य विश्रुतो महाविद्यालयो महाराजासंस्कृतकालेज इतिनाम्ना प्रचलति स्म यत्र संस्कृत-विषयोऽपि शिक्ष्यते स्म। अत्र संस्कृतप्राध्यापकपदे पं. मधुसूदनओझा, पं. वीरेश्वरशास्त्री, पं. बदरीनाथशास्त्री, पं. सूर्यनारायणाचार्य इत्यादयो विद्वांसोऽधितस्थिवांसः आसन्। १९२५ ई. वर्षे एव कालेजेऽस्मिन् प्राध्यापकस्यावश्यकतामनुभूय पं. श्यामसुन्दरशर्मणाऽयं तत्र नियुक्तः। अस्मिन् कालेजे १९३१ वर्ष-पर्यंतमयं छात्रान् सरलया पद्धत्या संस्कृतं पाठयामास। प्राथमिक-संस्कृत-शिक्षण-पुस्तकानां लेखनायास्मै सोऽयं प्रसङ्ग एव प्रेरणामदात्।

एतदनन्तरं जयपुर-राज्याश्रितानां संस्कृतपाठशालानां निरीक्षकपदे सोऽयं राज्यशासनेन समाकारितो यत्र १९३१ वर्षात् १९३४ वर्षपर्यन्तमयं कार्यमकरोत्। तदानीं संस्कृतकालेजे महामहोपाध्यायः गिरिधरशर्मचतुर्वेदाः कालेजाध्यक्षपदे, साहित्यविभागाध्यक्षपदे च पं. श्रीबिहारीलालशर्मणः (डबलाचार्य इति प्रथिताः) कार्यं कुर्वाणा आसन्। बिहारीलालशर्मणां निधनोत्तरं भट्टमहोदयः साहित्यविभागाध्यक्षपदे १५।२।१९३४ दिनांकात् न्ययोज्यत यत्रायं ई. १९४२ वर्षावधि कार्यं कृत्वा सेवानिवृत्तोऽभूत्। नाऽऽसीदेतस्मात् पूर्वं देशीय-राज्यशासनेषु तादृशं कठोरमेकरूपं वा सेवानिवृत्तबन्धनम्। न वा राजकीयेष्वभिलेखेषु जन्मतिथेः प्रमाणस्य सुदृढाऽभूत् परम्परा।

१९४२ ई. वर्षे योऽयं भट्टमहोदयः केवलं ५३ वर्षदेशीय एवाऽभूत् किन्तु संयोगवशाद् राज्यसेवाऽभिलेखे कदाचन प्रारम्भे जन्मवर्षम् संवत् १९४४ इति समभूल्लेखितम् (संवत् १९४६ इति स्थाने) अतो यदा ५५ वर्ष-वयस्कानां राज्यसेवकानां सेवानिवृत्तिदृशा निर्धारणं क्रियमाणमभूत्तदाऽन्यैः सह भट्टमहोदयस्यापि सेवानिवृत्तिः क्रियतामिति विचारः समसूच्यत। भट्टमहोदयेन जन्मतिथि-संशोधनाय, सेवाया अवधिवृद्धये वा न जात्वपि प्रयतितम्। सोऽयं बहुधा कथयति स्म "मया सेवायै न कदापि प्रार्थनापत्र प्रत्तम्, स्वयं राज्याधिकारिभिरेव मम साहित्यसेवागुणानां बहुमानरूपेणाहं सेवायां गृहीतः। एवं हि यदा ते सेवानिवृत्तेरादेशान् दित्सवस्तर्हि किमित्यहं तद् विरोधे प्रयत्नान् कुर्याम्?" इति। एवं त्रिपञ्चाशद्वर्षीये वयसि भट्टमहाभागो राजकीयसेवातो निवृत्तोऽभूत्, न तु साहित्य-सेवातः। प्रत्युत सेवा निवृत्तेरनन्तरं सर्जनात्मक-कार्येषु समधिकं व्यापृतिः संजाता। सेवासमकालमपि सम्पादनकार्येषु, काव्यरचनायां, हिन्दी-व्रजभाषादि-साहित्य-सेवायां, ग्रन्थानां सम्पादन-टीकालेखनादिकार्येषु चाऽयं सर्वदैव व्यापृत एवाऽस्थात्।

महाराजाकालेजे पाश्चात्य-शिक्षाक्रमे प्रवृत्तांश्छात्रान् सरलया पद्धत्या संस्कृतं पाठयितुमनेन 'संस्कृत-सुबोधिनी' नामकं पाठ्यपुस्तकमलेखि, पुस्तकमिदं स्वयं तेन प्राकाशि। संस्कृतकालेजे शास्त्रिपरीक्षा-दित्सूंश्छात्रान् कादम्बरीं पाठयताऽनेन तस्याः संपादनं विधाय 'चषक' नाम्नी टीका व्यलेखि, साहित्याचार्य-श्रेण्याश्छात्रान् "रसगङ्गाधर" पाठयन्न्यं तस्य मुद्रितपाठं भृशमशुद्धं प्राप्य तस्य संस्करणं सम्पादनं च विधाय 'सरला' नाम्नीं टीकामलिखत्। शिलालेखानां संकलनं कृत्वा "शिलालेख ललन्तिका" नामकं पुस्तकं संपादयामास। पुस्तकत्रयमिदं निर्णयसागरमुद्रणालयेन मुंबईस्थेन प्राकाशि। एवं पाठनसहयोगीनि पुस्तकानि प्रणेतुं प्रेरणाऽस्मै राज्यसेवाप्रसङ्गेनैव प्रत्ता। किन्तु सेवा निवृत्तेरन्तरं विविधासु समितिषु, संस्थासु च सक्रियां भूमिकां निर्वहताऽनेन भूयसी साहित्यसेवा विहिता, स्वयमनेके ग्रन्थाः प्रणीताः प्रकाशिता अपि। सर्वेषामेषां विवरणमग्रे प्रदास्यते।

**जीवन-यात्राः**-सोऽयं प्रारम्भादेव राजकीय-भूसम्पत्तिभोगी आसीदिति वेतनादिरायः केवलं गौणरूपेण, द्वैतीयकं सहायकं वाऽऽयस्त्रोतोऽस्याऽभूत्। इदमेव कारणं यत्सेवानिवृत्तिस्तदानीमार्थिक-सन्तुलनमस्य न जात्वपि विषमीकर्तुमक्षमत। निवृत्तिवेतन (पेंशन) मस्मै द्वाचत्वारिंशद्-रूप्यकात्मकं जयपुरराज्येन निर्धारितम्। बहुधा सोऽयं परिहासे कथयति स्म 'मदीयं निवृत्तिवेतनं मदीयस्यैकस्य भृत्यस्य मासिकवेतनाय पर्याप्तं भवतीति सुमहद् योगदानमस्य।" भूसम्पत्तेरायेन सोऽयं नगरसीमायामेकं भवनमक्रीणात्। नवीनायां वसतौ भवनं निर्मापयामास, पुत्र्योः पुत्रस्य च विवाहसमारोहानायोजयामास।

अखिलभारतीय-हिन्दी-साहित्य-सम्मेलनस्य द्वात्रिंशत्तमेऽधिवेशने स्वागतमंत्रित्वेन जयपुरे सुमहान्तं हिन्द्याः साहित्यिकं समारोहं १९४४ ई. वर्षे; अ. भा. संस्कृत-साहित्य-सम्मेलनस्याष्टा-दशेऽधिवेशनेऽखिलभारतीयकविसंमेलनसभापतित्वेन संस्कृतविदुषां जयपुरे सङ्गमं १९४५ वत्सरे च सोऽयं सफलयामास। १९४३ ई. वर्षे महात्मगान्धिने समर्पितेऽभिनन्दनग्रन्थेऽस्य संस्कृत-काव्यबद्धः

संमानाञ्जलिरस्य स्वातन्त्र्य-संग्रामेण सहानुभूतिं प्रमाणयति। भारतस्य स्वातन्त्र्यानन्तरं जयपुरादिराज्यानि भारतीय-संघे सममिलन्, अनुपदमेव भूसम्पत्ति (जागीर) धारकाणां "जागीरा" ख्या सम्पत्तिरपि राजसात्कृता सर्वकारेण, किन्तु नेदमपि दृढसेवाव्रतिनोऽस्य जीवने विचलनमापादयामास यतो ह्यस्य जीवनं तपोनिष्ठानां, संयमिनां, निःस्पृहाणां मुनीनामिव सरलमाडम्बरहीनं चाऽभूत् प्रारम्भादेव। सोऽयं स्ववस्त्राणि स्वयं प्रक्षालयति, प्रतिदिनं भ्रमणाय प्रयाति स्म प्रतिदिनं संस्कृते किंचन लेख्यमेवेति व्रतमपि निसर्गतो धारयतिस्म।

एतस्यैवेयं परिणतिर्यदनेन संस्कृते लिखितानां पृष्ठानां गणनाऽपि कर्तुमद्य न पार्यते। प्रभूतानामेतल्लिखितानां ग्रन्थानां, सम्पादितानां, पत्रिकाणां लेखानां, कथानामन्यासां च रचनानां पृष्ठसंख्या लक्षादप्यधिका सम्भवेदिति स्फुटं प्रतीयते।

विविधभाषाऽभिज्ञोऽयं भारतीये शास्त्रीयसंगीते सुभृशं रुचिशीलोऽभूत्। आकाशवाण्याः प्रमुखसंगीताधिकारिणा ठाकुरजयदेवसिंहेनाऽनुरुद्धोऽयं 'ध्रुपद'-शैल्यां गीतान्यप्यलिखत्। ग़ज़ल, ठुमरी-प्रभृतिशैलीषु गेयपदानि त्वयमाबाल्यं प्रणयतिस्मैव। सुदृढ-घटितगात्रस्यास्य व्यायामे रुचिः शैशवकालादेवाऽभूत्। जलसंतरणे, विशेषत उच्चस्थलेभ्यो जले कूर्दन-निमज्जनोन्मज्जनादिक्रीडासु चाप्यस्य कौशलं वार्धक्येऽपि जनान् विस्मापयति स्म। इदमेवाऽभूत् कारणं यन्मधुमेहादयो रोगा नैनमस्पृशन्। सप्ततिवर्षायुष ऊर्ध्वं हृदयरोगस्य लक्षणानि समुद्भवन् तथापि विविधकार्येषु लेखने च व्यापृतोऽयं न विश्रमं स्पृहयति स्म। यद्यपि नायं ग्रामान्तरस्य नगरान्तरस्य वा यात्रामभिरोचयति स्म, तथापि संमेलनेषु इतरेषु च समारोहेषु, व्याख्यानादेः कवितापाठस्य वा कृतेऽयं प्रमुख-साहित्यिकसंस्थाभिः सर्वकारैर्विश्वविद्यालयैश्चाऽऽमन्त्र्यते स्म, प्रयाति स्म च कतिधा तद्विधेषु प्रसङ्गेषु। कविसंमेलनेषु तु प्रायश एवायं सभापतिपदमारोढुमामन्त्र्यते स्म।

एवं निरन्तरं साहित्य-सेवाव्यापृतस्याऽस्य निधनं ७५ वर्षावस्थायां जयपुरे हृदयाभिघात-वशात् ४ जून, १९६४ दिनांके समभूत्। सर्वकारेण, राज्यपालादिभिः, पत्रपत्रिकाभिः, समग्रस्यापि देशस्य विद्वद्भिश्चाऽस्य निधनं साहित्यजगतोऽपूरणीया क्षतिरुदघोष्यत, शोकप्रस्तावाः पारिताः, श्रद्धाञ्जलिविशेषाङ्कोऽपि 'भारती' संस्कृतमासिकेन प्राकाश्यत।

**साहित्य-सर्जनाः**–प्रायः पञ्चसप्ततिवर्षात्मके समग्रेऽप्यायुषि भट्टमथुरानाथशास्त्रिणाऽविरतं संस्कृत-साहित्यसेवाव्रतं निरूढम्। कैशोरे वयसि हिन्दी-उर्दू-वङ्गभाषा-गुर्जरभाषादीनां ज्ञानमासाद्य तासां साहित्यमप्यनेनाऽधीतं, तत्र च यद् वैशिष्ट्यमनुभूतं तस्याऽवतारणा संस्कृतेऽपि कथं भवेदित्यस्य विशेषतः प्रयत्नोऽनेनाऽक्रियत।

तस्मिन्-हि काले काव्यजगति व्रजभाषाया महत्त्वमक्षुण्णमासीत्। अभूत् सेयं भाषा प्रायः समग्रस्यापि भारतस्य काव्यभाषात्वेन प्रतिष्ठिता पञ्चशताब्दीर्यावन्मध्यकालीनेतिहासे। कबीरदासस्य

तुलसीदासस्य च समयमारभ्य रीतिकालं यावत् (प्रायः पञ्चदशीं शताब्दीमारभ्याष्टदशीं यावत्) प्रमुखैः कविभिरस्यां सुललिता काव्यरचना व्यधायि। एतस्याः प्रमुखं छन्दोऽभूद् 'घनाक्षरी' त्याख्यं यत् 'मनहरण', कवित्त इत्यादि-संज्ञाभिरप्यभिधीयते। अस्मिन् हि छन्दसि अन्त्यानुप्रासस्य, लयबद्धायाश्छन्दोगतेः, दण्डक-सहजस्य विस्तारस्य च यश्चमत्कारः स काव्यमञ्चेषु कविसंमेलनेषु च श्रोतृणां हृदयान्यावर्जयति स्म, अत एव छन्द इदं कवित्वस्य निकषायमाणममन्यत् तत एव 'कवित्त' इत्याख्याऽस्य प्रथिता।

भट्टमहोदयस्य पूर्वजाः संस्कृत-प्राकृतादिवद् ब्रजभाषाया अपि सुकवयोऽभूवन्। तेषां परम्परामनुसरताऽनेनाऽपि ब्रजभाषायां काव्यरचना प्रारब्धा किन्तु तस्या लालित्यं संस्कृतेऽवतारयितुं ब्रजभाषाछन्दः- सुसंस्कृतकवितामप्ययमारेभे। उर्दू-प्रचालितासु 'गजल- गीतिषु प्रयुज्यमानानां वृत्तानां बन्धेऽपि संस्कृत-गीतिरनेनाऽवतारिता। तस्मिन् समये प्रथितासु ठुमरी-दादरा-प्रभृति-शैलीषु सरल-गेय-लयेषु चापि गीतयोऽनेन निबद्धाः। सर्वेणानेन सर्जन-व्यापारेणाऽस्य प्रतिपिपादयिषितमभूद् यत् संस्कृतमद्यापि जीविता भाषा, न मृता। जानन्ति काव्य-मर्मज्ञा यत् कविसम्मेलनेषु मुशायराख्यसभासु च गीतयो गजल-गीतयश्च श्रोतृन् कथमाप्याययन्ति। शैल्यामस्यां निबद्धा गीतयो विशेषतश्च घनाक्षरीच्छन्दोबद्धा सानुप्रासा सुरम्या च कविता यदाऽनेन जयपुरीयविद्वत्सभासु श्राविता-श्रोतृमण्डल्यामलौकिकमिव किञ्चित् कार्मणं प्रसारितवती तदा तत्कालीनैरधिकारिभिः, म. म. पं. गिरिधरशर्मप्रभृतिभिर्विद्वद्भिश्चायं घनाक्षरीच्छन्दःसु काव्यरचनायै प्रोत्साहितः।

एतस्यैव परिणामोऽभूत् "मंजुकवितानिकुञ्ज" इत्याख्यायाः काव्यशृङ्खलायाः प्रणयनं यस्यां "मञ्जुनाथ" इति नाम्नाऽयं काव्यसंकलनत्रयम् प्रकाशयामास। "साहित्यवैभव" इत्याख्ये संग्रहे रसालंकारादिघटिता ऋतुवर्णन-नवरसवर्णन-प्रेमगीति-नीति अन्योक्ति-प्रभृतिविषयिणी कविता १९३० ई. वत्सरे निर्णय-सागर-मुद्रणालये मुद्रयित्वाऽनेन प्रकाशिता। जयपुरनगरस्य तद्राजवंशस्य नागरिकाणामुद्यानानामन्येषां च स्थलानां वर्णनपरा काव्यरचना १९४७ ई. वर्षे 'गोविन्दवैभव'नाम्ना गोरखपुरस्येन गीताप्रेसेन प्रकाशितः। एषु काव्येषु व्रजभाषाच्छंदसां प्रयोगस्त्वभूदेव, उर्दूछंदसां संस्कृतच्छन्दसामपि सर्वेषां नर्कुटकाश्वघाटी-मन्दाक्रान्ताः-शिखरिण्यादीनां प्रचुरः प्रयोगोऽस्ति। १९५७ ई. वर्षे गोविन्दवैभवं यदा प्रकाश्यमानमासीत्-अनेनाऽयं स्वकीयश्चरमः कविताग्रन्थ इति घोषितमुक्तं च यदाजीवनमहं नरवर्णनादिषु, शृंगारवीरादिरस-निबन्धने च स्ववाणीं व्यापारयन्नभूवम्। संप्रति गोविन्द-गुणावर्णनेन पावितां वाणीं नाहं नरकथयाऽऽविलीकरिष्यामि। तत आरभ्याऽनेन गद्य एव लेखनी व्यापारिता, नैकमपि पद्यं लिखितम्। एवं विविध-विषयक-संस्कृतकाव्यरचनाया, नवीनच्छंदसां संस्कृतेऽवतारणया चाऽस्य कवित्वयशः सर्वत्र प्रथितं कविशिरोमण्यादय उपाधयश्च संस्कृत-संस्थाभिरदीयन्त। काव्यरचनातिरिक्तेऽपि विविधे क्षेत्रेऽस्य साहित्यसर्जना सुभृशमुल्लेखनीया।

सूचितचरमिदं यत् संस्कृताध्ययनेन समकालमेव व्रजभाषासाहित्यस्य, हिन्दीभाषायाः बंगभाषायाः आङ्गलभाषायाश्चाप्यध्ययनमनेन स्वकीयरुचिवशाद् विहितम्। आसीत्तदा जयपुरनगरे ब्रजभाषाकवीनां

राजसंमानितानां कवीश्वराणां च भूयान् समुदायः। तत्प्रेरणया 'कविमंडल' इत्याख्या हिन्दी-कविसंस्था तदानीं प्रचलतिस्म यस्याः सक्रियः कार्यकर्ताऽभूदयम्। हिन्दीसाहित्यरात्रिपाठशाला-नाम्नीं सायङ्कालीनां पाठशालामप्यसौ स्थापयामास यस्यां छात्राः- हिन्दी-साहित्य-मपठन्, हिन्दी-साहित्य-सम्मेलन (प्रयाग)स्य प्रथमा-विशारद-साहित्यरत्नादि-परीक्षासु च प्राविशन्।

**पत्रकारता**ः-संस्कृत-साहित्यसेवा त्वनेन छात्रावस्थात एव प्रारब्धाऽभूत्। जयपुरीयो महाराजसंस्कृतकालेजस्तदानीं भारतविश्रुतं वैदुष्यकेन्द्रमभूद्यत्र विविधशास्त्र-निष्णाता विद्वांसोऽध्यापक-पदमलमकुर्वन्। छात्रा अपि तदानीं भूरि प्रतिभाशालिनोऽभूवन्। एवंविधे प्रतिभोद्दीपके वातावरणे कालेजीयैः कतिपयैः प्रतिभाशालिभिश्छात्रैः "संस्कृत-चन्द्रिका" ऽऽख्यायाः संस्कृतसाहित्यपत्रिकायाः साहित्यरचनारुचिप्रेरितैः १९०४ ई. वत्सरे निश्चितं यजयपुरादपि संस्कृतस्य मासिकपत्रं किञ्चित्प्रकाशमेतु। एतस्याऽभूत्परिणामो यत् "संस्कृतरत्नाकर"- नामकं मासिकपत्रं जयपुरात्प्राकाश्यत येन संस्कृत-पत्रकारताया इतिहासे नवीनस्य युगस्यावतारणा कृता।

व्यतियाति काले पत्रमिदमखिलभारतवर्षीय-संस्कृतसाहित्यसम्मेलनस्य मुखपत्रत्वेन स्वीकृतिमलभत्। तदिदं प्रायोऽर्धशताब्दीं यावज्जयपुरात् प्रकाश्यत्, ततः काशीतः कानपुरश्च प्रकाशं लब्ध्वा दिल्ली-नगरीं मुख्यालयत्वेन प्रापत्। एतस्य संस्थापकेषु युवकेषु म.म. गिरिधरशर्मा चतुर्वेदी, राजगुरु पं. चन्द्रदत्त ओझा, व्याकरणाचार्यः सूर्यनारायणशर्मा, भट्टश्रीमथुरानाथशास्त्री च प्रमुखा अभूवन्। सर्वेऽप्येते विद्वांसस्तदानीं कालेजीयच्छात्राः स्नातका वा अभूवन्। सर्वप्रथमोऽस्याङ्को "जयपुर-विद्वन्मण्डल" द्वारा संपादित इति मुद्रिताक्षरोऽभूत् किन्त्वस्य संपादने 'संपादकीय' लेखने च प्रमुखतया सोऽयं किशोरो भट्टमथुरानाथ एव प्रामुख्येन प्रवृत्तोऽभूत्। प्रथमं संपादकीयमप्ययमलिखत्। परस्तात् सहकारि-संपादकत्वेन लेखांष्टिप्पणीश्चालिखत्। तदनु प्रभूतकालं प्रधान-संपादकोऽस्थात्। प्रायः पञ्चाशद्वर्षावधावस्मिन् द्विः, पर्यायद्वये, पत्रमिदं प्राकाशि। प्रायः सर्वस्मिन्नप्यस्मिन्नवधौ मथुरानाथशास्त्री सम्पादकरूपेणानेन सह सम्बद्धोऽस्थात्। अनेन प्रसंगेनाऽयं संस्कृत-पत्रकारतायाम् युगप्रवर्तनामिवाऽकरोत्। बङ्गभाषायां निपुणेन, तत्साहित्याध्येत्रानेन तदानीं बङ्ग-भाषायाः "प्रवासि"-प्रभृतीनां विश्वप्रथितानां मासिकपत्राणां, डॉ. रामानन्द-चट्टोपाध्यायप्रभृतीनां संपादकाचार्याणां च शैली संस्कृतेऽवतार्यानेके नूतनाः स्तंभा, विधाः, सरण्यश्च संस्कृते समारब्धाः। "विनोद-वाटिका" इति शीर्षकेण व्यङ्ग्यविनोदानां "संवादाः संपादकाभिप्रायाश्च" इति शीर्षकेण सामयिकघटनानां तत्संबंधे संपादकीयटिप्पणीनां, वङ्गमासिकपत्र "प्रवासि" संपादकादिभिः प्रचालितस्य कष्टिपाथर' (निकष) स्तंभस्यानुरूपमेव 'साहित्यकुसुमवाटिका' शीर्षकेण नूतनसाहित्यसमालोचनस्य च स्तंभानयं नियतीकृतवान् लघुकथाः यात्रावृत्तानि (रिपोर्ताज), काल्पनिककथाः (फंतासी), एकाङ्कनाटकानि, ललितनिबन्धान् शोधलेखान्, लघूपन्यासान् (धारावाहिकरूपेण), अन्याश्च विविधा नूत्नविधाः समावेश्य पत्रस्यास्य माध्यमेन सोऽयं संस्कृतपत्रकारतायां नवीनानि कीर्तिमानान्यरीरचत्।

आदर्शरमणी, अनादृता, असमसाहसम् इत्यादयो बहवः संस्कृतोपन्यासा वङ्गभाषीयोपन्यास-शैली-प्रेरितेनानेन लिखिताः पत्रेऽस्मिन् धारावाहिक श्रृङ्खलासु प्राकाश्यन्त बहवो लेखकाः प्रेरिताः स्थापिताश्चानेन, पत्रस्यास्य बहवो विशेषाङ्काः विषय-विशेषमवलम्ब्य प्रभूतं साहित्यं प्रस्तुवन्तः प्रकाशमभजन्। वेदाङ्कः (विद्यावाचस्पति श्रीमधुसूदन झा-महाभागाय समर्पितो वेदविद्याविवेचनपरः) आयुर्वेदाङ्कः (स्वामिलक्ष्मीराम-भिषगाचार्याय समर्पितः), शिक्षाङ्कः (शिक्षापरिष्काराय प्रकाशितः) दर्शनाङ्क (म.म. पं. गिरिधरशर्मणे समर्पितः) इत्यादयो विशेषाङ्का ऐतिहासिकं महत्वं दधति। इत्थं हि सन् १९०४ वर्षादारभ्य ई. १९४९ वर्षपर्यन्तं यदवधीदं पत्रं जयपुरात्प्राकाश्यत, सोऽयं संपादकत्वमस्य निरवहत्। (कतिपयं कालं व्याकरणाचार्याः पं. सूर्यनारायणशर्मणोऽपि संपादकत्वमन्वतिष्ठन्) १९५० ई. वर्षात्काशीं प्रति प्रतिस्थतवत्यस्मिन् पत्रे १९५२ ई. वत्सरे जयपुरात् प्रकाश्यमानाया 'भारती' संस्कृतमासिक-पत्रिकायाः-संपादनमनेनाऽऽरब्धं यन् मृत्युपर्यन्तं निर्व्यूढम्।

**अनुवादाः**–विविधभाषागतस्य साहित्यस्य संस्कृतेऽनुवादमाध्यमेनावतारणाऽप्यस्य प्रमुखमवदानम्। प्राकृतभाषायाः प्रसिद्धस्य मुक्तकसंग्रहस्य 'गाथासप्तशती'ति ख्यातस्य हालकवि-विरचितस्य वाचनं कुर्वाणेनानेनानुभूतं यत्प्राकृतमिदानीं न तावत् परिचितमिति प्राकृतगाथास्त्वरितमेव न हृदयङ्गमा जायन्ते। यदि तासां संस्कृते समच्छन्दोऽनुवादः स्यात्तर्हि संजीवता सुभृशमनुभूयेत। एतस्याभूत फलं यत्सर्वासामपि गाथानां संस्कृते निबन्धनं कृत्वा, आलोचनात्मक-तुलनात्मक-विवेचन-परक-भूमिकया सह "संस्कृत-गाथा-सप्तशती" ति शीर्षकेण तामिमां कृतिमसौ निर्णयसागर-मुद्रणालयात् प्रकाशयामास। अस्या व्यङ्ग्य-सर्वङ्कषानाम्नीं टीकामप्ययमलिखत् या सहैव प्राकाशि १९३० ई. वर्षे।

ब्रजभाषाकवेः विहारिणाः सप्तशतीमप्ययमनूदितवान् संस्कृते दोहाच्छन्दःस्वेव। एवंविधानि संस्कृतदोहाच्छदांसि बहूनि 'विहारिविलास' इति शीर्षकान्तः 'साहित्यवैभव' काव्ये प्रकाशितानि सुबहुचर्चितान्यभूवन्। वङ्ग-भाषाया बहूनामुपन्यासानां, हिन्दीकथाकाराणां प्रेमचन्द-प्रभृतीनां बह्वीनां लघुकथानां, वङ्गीयानां गल्पानां (लघुकथानाम्), निबन्धानामन्यासु च विधासु विलिखितस्य प्रभूतस्य साहित्यस्यानुवादा अनेन निहिताः। एवंविधसाहित्यस्यच्छायां गृहीत्वा तदनुहारिण्यां शैल्यां संस्कृते तद्विधा-रचना विधायानेन संस्कृतेऽभिव्यक्तिविधानां विस्तारं वैविध्यं चाऽऽनायितुं प्रयतितम्।

**संस्कृत-भाषाया जीवितत्वख्यापनम्**–एवं हि सर्जनात्मकलेखनेन पत्रकारतया च संस्कृते नूतनं जीवनं संचारयितुमस्य प्रयासाः सोद्देश्या अभूवन्। तदानीं हि संस्कृते विदुषां वर्गद्वयमभूत्। एकोवर्गोऽभूत् पाश्चात्यशोधपरम्पराप्रभावितानां विदुषां ये संस्कृतमन्यान्यप्राच्यभाषावत् क्लासिकलभाषां मत्वा तस्यामनुसन्धानस्य प्राच्यविद्याशोधस्य च क्षेत्रमेवाऽपश्यन्, आंगलभाषामाध्यमेन, इतरभाषासु वा तस्या दर्शनानां शास्त्राणां प्राचीन-साहित्यस्य गवेषणामनुवादान् विवेचनां चैव फलप्रदाममन्यन्त। इतरो वर्गोऽभूत्तेषां विदुषां ये संस्कृतं मातृभाषावद् भाषान्ते स्म, जीवितां जाग्रतीं च भाषाममन्यन्त, तस्यां मौलिकं सर्जनात्मकं च लेखनमनवरतं प्रचाल्यान्यान्याऽऽधुनिक-भारतीयभाषावत्तामप्याधुनिकीं भाषां

मत्वा तस्यां पत्र-पत्रिकाणां प्रसारं कविसम्मेलनाऽऽदीनामायोजनं च सार्थकमनुभवन्ति स्म, जीवित-भाषावत् प्रतिष्ठापयितुं च तामाजीवनं प्रायतन्त। भट्टमहोदया अस्यैव वर्गस्य विद्वांसोऽभूवन्।

अत एवासकृत्ते एवंविधाः स्थितीरन्वभवन् यदा पूर्वमुल्लिखितस्य वर्गस्य शोधविद्वद्भिः संस्कृतभाषा केवलं प्राचीना भाषा व्यपदिष्टा, तस्यां नूतन-साहित्य-निर्माणमकिंचित्करमिव च प्रतिपिपादयिषितम्। एवंविधासु स्थितिषु साऽऽटोपं, विविधैः प्रमाणैः प्रत्यक्षमनुभावितैश्च चमत्कारैरेते संस्कृतामाधुनिक-भाषावत् जीवितां साधयन्ति स्म एवंविधानि बहून्यान्दोलनानि च परिचालयन्ति स्म यैः संस्कृतिरूतभाषा पूर्णतो जीविता सिध्येत्।

एवंविधेषु प्रयत्नेष्वेकाऽभूतन्नूतनविधासु नूतनच्छन्दःसु, नूतनविषयेषु च साहित्यसर्जना, अपरोऽभूद्विविधनवयुगीन-साहित्यस्य विभिन्न-भाषाभ्यः संस्कृतेऽनुवादः, इतरश्च संस्कृतेऽभिव्यक्तिपद्धतीनां विस्तारः।

सन् १९३० वत्सरे वाराणस्यां संजातेऽखिल-भारतीय-संस्कृत-साहित्य-संमेलनस्याधिवेशनेऽनेन प्रदर्शितं यदेकं वाक्यं संस्कृते कथं परः शतं प्रकारैर्वक्तुं शक्यते। एतेषु कतिपयानि वाक्यानि नवंबर १९३९ मासस्य "सुप्रभातम्" (वाराणसी) इत्याख्ये मासिक-पत्रे 'संस्कृतभाषाया महत्त्वम्' इति शीर्षकान्तर्गतं प्रकाशितान्यपि। एतदतिरिक्तं तैः पत्र-पत्रिकासु लेखमालामाध्यमेन, विदुषामभिमतानि संकलय्य तानि च प्रकाश्य प्रत्यक्षमेकमान्दोलनमपि प्राचाल्यत यत्र "किं संस्कृतभाषा मृतभाषा?" इति प्रश्नमुद्भाव्य तस्या जीवितत्वमख्याप्यत। संस्कृत-रत्नाकर (जयपुर) मासिकपत्रे (वर्षम् १२ अंकः ४, वर्षम् १४ अंकः ९) "गंधर्वसेनस्य स्वर्गयात्रा" इति शीर्षकेणैतद्विषयकं लेखमेकं लिखित्वा संस्कृतस्य मृतभाषात्व-प्रवादस्य निःसारतामेते स्फुटीचक्रुः। वाराणस्याः शोधमासिके "सारस्वती सुषमा" इत्याख्ये (सप्तम-वर्षस्य द्वितीयेऽङ्के "अपि नाम सेयमव्यावहारिकी" इति शीर्षकेण संस्कृत-भाषाया जीवितभाषात्वमेते साधयामासुः।

एवं हि संस्कृते सर्जनात्मकस्य लेखनस्य, पत्रकारताया नूतनविधानामन्येषामभिव्यक्ति प्रकाराणां च संस्कृतेऽवतारणस्यैकमुद्देश्यमिदमयभूदेषां दृष्टौ यदनेन संस्कृतभाषा विश्वस्य भारतस्य चाऽन्यान्याऽधुनिकभाषाणां समष्टौ जीविताया आधुनिक्याश्च भाषाया रूपे प्रतिष्ठितं स्थानं लभेतेति।

**संपादनं टीकालेखनं च**—पत्रसम्पादनेन साहित्यिक-पत्रकारताक्षेत्रे भट्टमहोदयैर्नवीन-युगावतारणा यथा विहिता, तथैव प्राचीनग्रन्थपरिष्कारे संपादने, भूमिकालेखने, टिप्पणादिलेखने चापि सुमहत्परिश्रान्तम्। पूर्वमुल्लिखितं कादम्बर्याः संपादनं 'चषक'-टिप्पणीलेखनं, रसगंगाधरस्य पाठपरिष्कारः, "सरला"-टीकालेखनं, तदतिरिक्तं गीतगोविन्दस्य संपादनं पादटिप्पणी-लेखनञ्चानेन निर्णयसागरमुद्रणालयानुरोधेन विहितम्। ग्रन्थत्रयमिदं तस्मादेव मुद्रणालयात् प्रकाशितं संस्कृतविद्वत्सु बहूनि वर्षाणि लोकप्रियं सुप्रसूतं चाभूत्। सेवानिवृत्यनन्तरमनेन, स्वपूर्वजेन श्रीकृष्णभट्टेन

लिखितस्यैतिहासिकमहाकाव्यस्य "ईश्वरविलास"-नामकस्य दुर्लभा पाण्डुलिपिः पुणेस्थभाण्डारकर शोध-प्रतिष्ठानादधिगत्य संपादिता, विस्तृतभूमिकया, ऐतिहासिक-टिप्पणीभिः, स्वनिर्मिताया "विलासिनी टीकया च सह राजस्थानप्राच्यविद्याप्रतिष्ठानात् (जोधपुरात्) प्रकाशिता। श्रीकृष्णभट्ट-लिखितायाः पद्यमुक्तावल्याः (मुक्तकसंग्रहस्य) टीका "गुणगुम्फनिका"ऽनेन लिखिता, ग्रन्थस्य संपादनं भूमिकया सह कृतं, ग्रन्थश्चायमपि राजस्थानप्राच्यविद्याप्रतिष्ठानात् प्रकाशितः। श्रीकृष्णभट्टस्य छन्दःशास्त्रग्रन्थो वृत्तमुक्तावल्याख्योऽपि पुणेस्थ-भाण्डारकरशोधसंस्थानादानाय्य सभूमिकोऽनेन राजस्थानप्राच्यविद्याप्रतिष्ठानात् प्राकाशि। शिलालेखरूपेण यानि काव्यानि देशस्य विविधेषु प्रान्तेषु सुरक्षितानि सन्ति, ताम्रपत्रादिरूपेण च यानि दानपत्राणि प्राचीनैर्नरेशैः सुललित-संस्कृतभाषायां विलेखितानि, तेषामध्ययनं संस्कृतपाठ्यक्रमे समावेन्तिमभूद्विभिन्नै राज्यैः। एवंविधस्याध्ययनस्य कृते पाठ्यपुस्तकरूपेण कतिपय-शिलालेखादीनां संकलनं, संपादनं टिप्पणीलेखनं च विधाय 'शिलालेखललन्तिका' नाम्नाऽयं ग्रन्थो निर्णयसागरात्प्राकाशि भट्टमहोदयैरिति पूर्वं सूचितमेव।

**नाट्यकृतयः**—काव्यलेखनेऽस्य नैपुण्यं तु विश्रुतमेव, अनेन महाराजसंस्कृतकालेजे साहित्य-विभागाध्यक्षपदमधितिष्ठता 'उत्तर-रामचरित' नाटकस्य मंचोपयोगि रूपान्तरणं विधाय तस्य नाटकस्य कालेजीयनाट्यसंघद्वारा रामप्रकाशाख्ये प्रेक्षागृहे मञ्चावतारणे सुमहद् योगदानमनुष्ठितम् मध्ये मध्ये स्वनिर्मिताः संस्कृतगीतयोऽन्तर्वेशिताश्च [१९३१ ई. वर्षे]। ततश्च महाभारात-कथामाधारीकृत्य 'पाण्डव-विजया'-ख्य-नाटकस्य मञ्चोपयुक्ता पटकथा विविधप्राचीन-नाटकानामाधारेण रचिता, १९४० ई. वर्षे च तस्मिन्नेव नाट्यगृहे मंचिता च। जयपुरे आकाशवाणी-केन्द्रस्य प्रारम्भादनन्तरं तदधिकारिभिरनुरुद्धोऽसौ "मंजुला"ख्यं ध्वनिनाट्यं लिलेख। प्रसारितमिदं जयपुरीयाऽऽकाशवाणीकेन्द्रात् १६।१।५७ दिनाङ्के ८।८।५८ दिनाङ्के च।

**गद्य-रचनाः**—संस्कृतगद्येप्यस्य लेखनं विपुलमस्ति। शताधिकाः संस्कृत-लघुकथाः, दशाधिका उपन्यासाः, बहवो ललित-निबन्धाः, काल्पनिक-कथाः (फन्तासी) व्यङ्ग्यलेखाः यात्रावृत्तानि, रूपककथाः प्रतीक-कथाः, विनोदाः अन्यासु च विधासु लिखिताः सर्जनात्मकरचना गणनातीता एव। शोधलेखाः, समालोचनात्मक-लेखाः, साहित्यालोचनटिप्पण्यः, सामयिक-टिप्पणानि, समाचार-सारादयश्चापि भूरिशो व्यलेख्यन्तानेन। वाराणसी-जयपुर-दिल्ली-प्रभृति-केन्द्रेभ्यः प्रकाशितेषु सर्वेष्वपि पत्रेष्वस्यैवंविधा रचनाः प्राकाश्यन्त यासां सूची सुदुष्करा साङ्गोपाङ्गत्वेन निर्मातुम्। तथापि बहुभिः शोधार्थिभिरेवं-विधरचनासु बह्वीनां सूचीकरणस्य प्रयत्नाः सन्त्यनुष्ठिताः। तत एवैवंविधा सूची शक्येत द्रष्टुम्।

**हिन्दी-रचनाः**—हिन्दीभाषायामप्यनेन बहवो ग्रंन्थाः, लेखाः लघुकथाः, कविताश्चालिख्यन्त। वाल्मीकीये रामायणे विभीषण-शरणगति-प्रसङ्गमवलम्ब्य सुरुचिरं विवेचनात्मकं नूत्नमेव पन्थानमनुसरत् पुस्तकं 'शरणागति-रहस्य' नाम्नाऽऽनेन लिखितं यद् गीताप्रेसात् (गोरखपुर) प्रकाशितं लोकप्रियमभूत्। 'सरस्वती'-'माधुरी'-'कल्याण'-जयभूमि-राष्ट्रभाषा-प्रभृति-पत्र-पत्रिकासु लिखिता अस्य लेखा लघुकथाश्च

हिन्दीजगत्याप्येनं सुविदितमकार्षुः। विविधेष्वभिनंदन-ग्रन्थेषु तत्सम्पादका एनमुपसृप्य विविधविषयकान् लेखानस्य गृहीत्वा प्रकाशितवन्तः।

**समाजे संस्थानः**—इदमभूत्स्वाभाविकं यदस्य सुदीर्घायै संस्कृतसेवायै परितुष्यद्भिर्विद्वद्भिः संस्थाभिः सर्वकारैश्च विविध-संमानोपाधिप्रदानद्वारा, सदस्यताप्रदानद्वारा चास्य संमाननं क्रियेत। अतः सेवाकाले एवायं वाराणस्यादि-विविधविद्या-केन्द्राणां परीक्षकः, प्रमुख-वक्ता, समारोहाणामध्यक्षो, मुख्यतिथिर्वा निर्धार्य समामान्त्रितः सादरम्। वाराणस्यां संपूर्णानन्द-संस्कृत- विश्वविद्यालयस्य स्थापनानन्तरं तस्य दीक्षान्तसमारोहावसरे समायोजितस्याखिल- भारतीय-कवि-सम्मेलनस्याध्यक्षपदे, अखिलभारतीय-संस्कृतसाहित्य-संमेलनेन समायोज्यमानानां कविसंमेलनानामध्यक्षपदे, राजस्थान-संस्कृत-साहित्य-संमेलनस्य बीकानेरनगरेऽधिविष्टस्य द्वितीयाधिवेशनस्याध्यक्षपदे (१९५० ई.), विविधानामन्येषां समारोहाणां चाध्यक्षपदेऽसकृदयं सानुरोधं प्रतिष्ठापितोऽभूत्। राजस्थान-सर्वकारेण स्थापितायाः (सन् १९५७ ई.) साहित्य-अकादम्याः संस्थापकसदस्योऽयमभूत्। राजस्थान-राज्येन संस्कृत-शिक्षाया नीतिनिर्धारणाय नियुक्ताया विशेषज्ञसमितेः संस्कृत-मण्डलस्य च सदस्योऽयमभूत् (१९५२-१९६२)। बडौदा-विश्वविद्यालयेन रससिद्धान्तानां काव्य-सिद्धान्तानां च विषये व्याख्यानानि विधातुमयमामन्त्रितोऽभूत् (१९५६ ई.)। उज्जयिन्यां कालिदाससमारोहस्य परम्परां प्रारब्धवती कालिदास-समितिरेनं सदस्यं निर्माय समारोहावसरे समायोज्यमानानां कविसंमेलनानामध्यक्षं च विधाय स्वगौरवमेधितवती। तस्याः प्रमुखः श्रीसूर्यनारायण-व्यासस्त्वेनम् "अभिनवकालिदास" पदेनैव संबोधयति स्म।

सन् १९३६ ई. वत्सरे जयपुरेऽधिविष्टेन (पंचविंशाधिवेशने) अखिलभारतीय-संस्कृतसाहित्य-संमेलनेनास्मै कविशिरोमणिः इत्युपाधिः, वाराणसीस्थ-भारतधर्ममहामण्डलेन साहित्यवारिधिरित्युपाधिः, बम्बईस्थ-वेल्लनाटीय-तैलङ्गसभया "कवि-सार्वभौम" इत्युपाधिश्चास्मै स्वर्णपदक-संमानोत्तरीयादिभिः सह सादरमुपायनीकृतः। १९६१ वत्सरे यदा राजस्थान-सर्वकारेण संस्कृतविदुषां कृते पुरस्कार-योजना प्रारभ्यत, तदा सर्वप्रथममस्मै त्रिसहस्रमुद्रात्मकं पुरस्कारं प्रदाय योजनाया अस्याः शुभारंभो विहितः। बह्वीभिः संस्थाभिर्मरणोत्तरमस्मै संमानाः प्रत्ताः।

**निःस्पृहता**ः—पूर्वमुल्लिखितमेव यद् भट्टमहोदयो जयपुर-राज्येन प्रदत्तायाः प्रभूतसंपत्तेः स्वामी आसीदिति नानेनार्थकष्टमनुभूतं यौवने। बाल्ये तु सुमहतीमार्थिकीं विपत्तिं सोढ्वा, स्वमतिबलेन विविधान् संकटानुत्तीर्य स्वकीयं राजसंमानितं संस्थानमनेन कथं संकटादुद्धतमित्यस्य वर्णनमनेन 'साहित्यवैभव' काव्ये कृतमस्ति। द्वारकानाथ-भट्टस्य सुतोऽयं यदा सुंदरलालभट्टस्य दत्तकोऽभूत्तदानेन ज्ञातं यत् समग्राऽपिभूसंपत्तिः पूर्वजैः बन्धकतया उत्तमर्णानामधिकारे निक्षिप्ताऽस्ति; न कोऽप्यायः, ऋणं वर्धते यतस्तस्य कुसीदमनुदिनं प्रवर्धते। निःसन्तानदिवङ्गतेन श्रीसुंदरलालेन, अन्यैश्च स्वेच्छाचारणानुरागिभिरनवधानिभिः पूर्वजैः स्वकीयकार्यार्थं विभिन्नेभ्यो जनेभ्यः ऋणानि गृहीतान्यभूवन्, तस्यायं परिणामोऽभूत्। प्रबन्धका भ्रष्टचरण-परवशामध्ये सुबहु वित्तं भुञ्जते स्म। अनेन सर्वापि व्यवस्था कैशोर्यादेव सावधानं

परीक्षिता, प्रबन्धो निजसात् कृतः, भूसंपत्तिर्बन्धकत्वान्मोचिता, ऋणं परिशोधितम्, आयः संवर्धितः। एवं प्रायस्त्रिंशद्वर्षात्मके वयस्ययं स्व-निर्भर ऋणमुक्तश्चाजायत। तदनन्तरमधिकेनोत्साहेन साहित्यसेवापरः समजायत।

एवं च साहित्यसेवातः पुस्तकलेखनादिकार्येभ्यश्च नायं कदापि किंचन लिप्सुरभूत्। एतस्य परिणामोऽपि तथाविध एवाभूत्। विपुलग्रन्थ-लेखकेनाप्यनेन नैकमपि रूप्यकं कस्मादपि प्रकाशकाद् 'रियाल्टी'-रूपेणाधिगतम्। निर्णयसागर-मुद्रणालयः संपादनस्य नाममात्रं किंचन पारिश्रमिकं प्रारंभ एव ददाति स्म, न रायल्टीं निर्धारयति स्म। राजकीयपाठ्पुस्तक-मंडलेन यत् संस्कृत-पाठ्यपुस्तकमनेन लेखितम्, तस्य पारिश्रमिक-रूपेण सकृदेकशः कश्चन राशिरवश्यमस्मै प्रत्तोऽभूत् 'संकृतसुधा'ख्य-पाठ्यपुस्तकस्य लाभस्तु यः कोऽप्यभूत्, मध्यस्थव्यक्तिभिः सानन्दं भुक्तः।

**परिवेशः परिसरश्च**– यस्मिन् युगे भट्टमहाभागैराजन्म संस्कृतसेवाव्रतं निरूढं, तद् युगमेवंविधानां निःस्वार्थ-सरस्वती-सेवकानामेवाऽभूत्। अनवरतसाहित्य-सर्जनासत्रमेतदैभिर्न कस्मैचिल्लाभलोभाय, न वा',यशोलिप्सया, न च कस्यचन बन्धनेन प्रेरणया वा परिचालितम् आसीत्सा काचनान्तःप्रेरणैव यया खल्वेभिर्निश्चितमासीत् यत् प्रतिदिनं संस्कृते किंचन लेखनं विना भोजनं नैव करणीयम्। वाराणस्यां जयपुरेऽन्येषु च संस्कृतविद्याकेन्द्रेष्वभूवँस्तदानीमेवंविधा एव निःस्वार्थ-संस्कृतसेवका मनीषिणो येषां पुण्यान्यद्यास्माभिरुपभुज्यन्ते। भट्टमहाभागानां ज्येष्ठतनूजत्वसौभाग्येन ममाऽप्यभूदवसरस्तदानीन्तनानामेवंविधानां मनीषिणां दर्शनस्य, तेषां वैदुष्य-सुरभितासु चर्चागोष्ठीषु प्रवेशस्य, यासु न राजनीतिर्न व्यवसायो न वाऽन्यविधं किंचन वस्तुजातमभूच्चर्चाविषयः, संस्कृतसंबन्धिन्यश्चर्चाः, शास्त्र-सन्दर्भ-संवलिता एव विनोदाः, काव्यालापसन्दानिताः परिहासा-एवंविधा एव व्यासङ्गास्तेषां समवाये, सग्धिषु, जलविहारोपवनविहारादिषु सर्वविधेषूत्सवावसरेषु चाभूवन्नित्यधुना स्मरामि। कथं युगमेवेदानीं विपरिवृत्तम्। अस्तां तावत्।

भट्टमहोदयां सुहृत्परिकरे जयपुरीयाः स्वामिलक्ष्मीराम-महभागा आयुर्वेदमार्तण्डाः, म.म. पं. गिरिधरशर्माणः, पं. चंद्रधरगुलेरिणोऽनुजाः पं. सोमदेवगुलेरिणः, राजगुरु-चन्द्रदत्तमैथिला, पं. सूर्यनारायणशर्माणः, प्रशासकाः श्री श्यामसुन्दरपुरोहिताः, वेदविज्ञाः पं. मोतीलालशर्माणः, पं. गिरिजाप्रसादद्विवेदाः, कलिकातास्थाः (शेखावाट्यभिजनाः) श्रीझाबरमल्लशर्माणः, पुणेस्थाः डा.पी.के. गोडेमहोदयाः, बम्बईस्था गोस्वामिगोकुलनाथाः, पं. पुरुषोत्तमचतुर्वेदाश्च, वाराणसेया नारायणशास्त्रिखिस्तेमहोदयाः, रायकृष्णदासमहोदयाश्च, वाङ्गा असितकुमारहालदाराः (प्रसिद्धाश्चित्रकारा ये जयपुरीयका-कालेजस्याध्यक्षा अप्यभूवन्) दाक्षिणात्याः, पं.पट्टाभिरामशास्त्रिणः, झालारापाटनस्था नवरत्नगिरिधरशर्माणः अन्ये च विभिन्नेषु प्रान्तेषु स्थिता विद्वांसः परिगणयितुं शक्यन्ते।

एतेषां शिष्येषु, स्व.गणेशरामशर्माणः, स्व.पं. वृद्धिचन्द्रशास्त्रिणः, स्व. वैद्यमुकुन्ददेवाः, पं. गोपालनारायणबहुरा, स्व. दीनानाथत्रिवेदी (मधुपः), उद्योगपतिः, स्व. श्रीकन्हैयालालतिवाडी, प्रशासकाः

श्रीशेरसिंह-द्वारकानाथपुरोहितप्रभृतयः, शिक्षकाः श्रीराधागोविन्दशर्मप्रभृतयः, विद्वांसः प्रो. प्रवीणचन्द्रजैन, डॉ. कन्हैयालालसहल, डॉ. नागरमलसहल, पं. प्रभुनारायणसहृदय-राष्ट्रपति सम्मानित पं. जगदीशर्म-मेहताबचन्द्रशर्मप्रभृतयः, जननेतारः श्रीसिद्धराजढड्ढा-पूर्णचन्द्रजैन-जवाहरलालजैन-युगलकिशोरचतुर्वेदी-हीरालालशास्त्रिप्रभृतयो बहवः सन्ति ये महाराजाकालेजाख्ये पाश्चात्य-पद्धत्यनुसारिणि महाविद्यालयेऽथवा महाराजासंस्कृतकालेजाख्ये प्राच्यपद्धत्यनुसारिणि महाविद्यालये वा गृहे भट्टमहोदयात्संस्कृतं साहित्यशास्त्रं वाऽधीतवन्तः।

आसां पंक्तीनां लेखकोऽपि तत्सुतत्वेन तेभ्यो न केवलं काव्यशास्त्रकाव्यरचना-न्यायवैशेषिक-सांख्य-पुराणेतिहासादिविषयान् अपि तु ब्रजभाषाकाव्य-हिन्दी-कवितादि- विषयान्नपि तदाशीर्वचोभिः स्नेहः-सम्भारेण च सहाऽध्यगीष्ट, स एव चाऽऽशीः पुण्यराशिरद्य तस्य समग्रो निधिः।

## भट्टश्रीमथुरानाथशास्त्रिणां कृतयः

## प्रकाशिता ग्रन्थाः-

**संस्कृते :- मौलिक ( स्वोपज्ञ ) रचनाः**

(१) साहित्यवैभवम् (सरसानां विविधविषयकमुक्तकानां विभिन्नच्छन्दो-बद्धानां संकलनम्) प्रकाशकः, लेखकः स्वयम्। १९३० ई.

(२) जयपुरवैभवम् (संस्कृते जयपुरवर्णनात्मकं काव्यम्) प्रकाशकः, लेखकः स्वयम्, (१९४७)

(३) गोविन्दवैभवम् (भक्ति-काव्यम्) प्रकाशकः गीताप्रेस, गोरखपुरम्, १९५७

(४) संस्कृतसुबोधिनी (संस्कृत-स्वयंशिक्षकं प्राथमिकपाठ्यपुस्तकम्) भागद्वये प्रकाशको लेखकः स्वयम् १९३९

(५) संकृतसुधा (संस्कृत-पाठ्यपुस्तकम्) प्रकाशकः राजस्थान पब्लिसिटी सिंडीकेट जयपुर १९५७

(६) सुलभसंस्कृतम् (संस्कृतस्य पाठ्यपुस्तकम्) प्रकाशकं राजस्थानराज्य-पाठ्यपुस्तकमंडलम् जयपुर १९५८

(७) गीतिवीथी (गेय-संस्कृतगीतीनां संकलनम्) लेखकेन प्रकाशिता १९३०

(८) आदर्शरमणी (संस्कृते उपन्यासः) लेखकने प्रकाशितः १९०६

(९) प्रबन्धपरिजातः (निबन्धाः) केन्द्रीयसंस्कृतविद्यापीठ, जयपुरम् १९८८

(१०) गीर्वाणगिरागौरवम् (अनुवाद संपादनं टीका ..................... सूचयन प्रबन्धः) संस्कृतस्य भाषाशास्त्रीय महत्त्वं केन्द्रीय संस्कृत विद्यापीठ, जयपुरम् १९८८

(११) संस्कृतगाथा-सप्तशती (गाथासप्तशत्याः समच्छन्दोऽनुवादः संस्कृते, व्यङ्ग्यसर्वङ्कषा टीका, भूमिका, संपादनं च) प्रकाशकाः निर्णयसागरप्रेस बंबई १९३३

(१२) गाथारत्न-समुच्चयः (शताधिकानां प्राकृत-गाथानां, तासां संस्कृताऽनुवादस्य च समुच्चयः) लेखकेन प्रकाशितः १९३५

**संपादिता व्याख्याताश्च ग्रन्थाः**

(१) रसगंगाधरः (सरला टीका)प्रका. निर्णयसागर प्रेस बंबई (१९३९-१९४६)

(२) कादम्बरी (चषकटीका) १९३९-१९४१ नि.सा. प्रेस बंबई

(३) शिलालेख-ललन्तिका (संस्कृते शिलालेखानां संकलनम्, व्याख्या भूमिका च) १९४१ बंबई

(४) गीतगेविन्दम् (संपादनं, पादटिप्पणी च) १९३७

(५) ईश्वरविलासः श्रीकृष्णभट्ट-कृतः (संपादनम् विलासिनी टीका, भूमिका, टिप्पण्यश्च) प्रका. राजस्थानप्राच्यविद्याप्रतिष्ठानम्, जोधपुर १९५८

(६) पद्यमुक्तावली : श्रीकृष्णभट्टकृता, (संपादनं, गुणगुंफनिका टीका, भूमिका च) प्रका. राजस्थानप्राच्यविद्याप्रतिष्ठानम् जोधपुर १९५९

(७) वृत्तमुक्तावली-श्रीकृष्णभट्ट-कृता (संपादन भूमिका च) १९६२

(८) संस्कृत-रत्नाकर मासिकस्य शिक्षाङ्कः विशेषांकः) १९४०

(९) " " आयुर्वेदाङ्कः " १९३४

(१०) " " वेदाङ्कः " १९३६

(११) " " दर्शनाङ्कः " १९४५

**प्रकाशिता ग्रन्थाः हिन्दीभाषायाम्**

(१) शरणगतिरहस्य, गीताप्रेस गोरखपुर (१९३७)

(२) व्रज-कवितावीथीः लेखक स्वयम् (१९४७)

(३) चतुर्थीस्तव " " (१९३५)

(४) पं. चन्द्रदत्तमैथिलः जीवनपरिचय, अभिनंदन समिति जयपुर (१९४०)

**अप्रकाशितो ग्रन्थः ( हिन्दीभाषायाम्, अनुवादः )**

स्तुति-कुसुमांजलिः—जगद्धरविरचिताः हिन्दी अनुवाद

**संस्कृते अप्रकाशिता ग्रन्थाः**

(१) भारतवैभवम् (भारतस्यैतिहासिकमन्यच्च महत्त्वम्)

(२) महाकविर्बिल्हणः (बिल्हणस्य जीवनं, कृतिपरिचय) "स्वरमंगला" पत्रिकायां प्रका.

(३) निबन्धविद्या (निबन्ध-लेखनकला)

(४) समस्या-सन्दोहः (अंशतः "संस्कृतप्रतिभा"ख्य-संस्कृतपत्रिकायां साहित्य अकादमी नई दिल्लीतः प्रकाशितः) समस्यापूर्तयः

(५) कथा-निकुञ्जः

(६) रसगंगाधर-टीका (विस्तृता)

(७) मंजुला (ध्वनिनाट्यम्)

# वैदिकसाहित्ये कृषिविज्ञानम्

**डॉ. सुन्दरनारायणझा**

वेदाः न केवलं भारतीयानामेवापितुजगतः समस्तप्राणिनां प्राणस्वरूपास्सन्ति। विश्वसंस्कृतेराधारस्तम्भा वेदास्तु ज्ञानविज्ञानयोरनन्तभण्डागारा एव सन्ति। प्राचीना ऋषयो मुनयश्च येषां वैज्ञानिकतथ्यानां विषये गम्भीरतमं चिन्तनम्मननञ्चाकुर्वंस्ते विषया अत्र वैदिकसाहित्ये विस्तृतरूपेण विवेचितास्सन्ति।

वैदिकसाहित्ये यत्र जीवविज्ञान-भौतिकीविज्ञान-रसायनविज्ञान-वनस्पतिविज्ञान-प्रौद्योगिकीविज्ञान-गणितीयविज्ञान-ज्योतिर्विज्ञानवृष्टिविज्ञान-भूगर्भविज्ञान-अन्तरिक्षविज्ञान-जलविज्ञान-अग्निविज्ञान-सूर्य-विज्ञान-पर्यावरणविज्ञानादीनां विविधवैज्ञानिकविषयाणां विस्तृतानि विवेचनानि वर्तन्ते, तत्रैव कृषिविज्ञानमपि रहस्यमयत्वेन प्रतिपादितमस्ति।

वस्तुतः मानव-जीवनमन्नमाधारीकृत्यैव तिष्ठति। यथोक्तं वेदे "जीवन्ति स्वधयाऽन्नेन मर्त्याः"[१] अर्थान्मानवानामावश्यकावश्यकतासु भोजनमेव प्रामुख्येनोक्तम्। भोजनं बिना मानवस्य जीवनं न स्थातुं शक्नोति। भोजनद्रव्यन्त्वन्नमेव, तस्मादथर्ववेदेऽन्नेन मर्त्याः जीवन्तीत्युक्तम्। तदन्नं खलु कृष्यैवोत्पद्यते, तस्मात्कृषिरेव मानवजीवनस्याधारः।

श्रूयते यत्सृष्ट्युत्पत्तेस्साकमेवान्नसमस्याऽप्युत्पन्ना। एतन्निवारणाय कृषेराविष्कारः सञ्जातः। कार्यमिदं वैदिकयुगेऽत्यन्तं गौरवास्पदम्मन्यते स्म, तस्मादिन्द्रपूषादीन् देवानेतस्मै कार्यसम्पादनाय परमात्मना संयोजितम्। तदुक्तं वेदे-"इन्द्रः सीतां निगृह्णातु"[२] इति। तदानीं कृषिकार्यं सर्वेभ्य एव प्रशस्तमासीत्। कवयो विद्वांसश्चैतत्कार्यं कुर्वन्ति स्म।[३] सर्गारम्भे विराट्स्वरूपो ब्रह्म मनुष्यानुपागत्य इरावतीमहूदुहत् तेन दोहनेन कृषिं सस्यञ्चावाप्तवान्। तस्मादुक्तं यत्-"ते कृषिं च सस्यं च मनुष्या उपजीवन्ति। कृष्टराधिरुपजीवनीयो भवति"[४] अर्थात् कृष्या अन्नेनैव च मनुष्याणां जीवनयज्ञश्चलति। ये मनुष्याः कृषिविद्यायां निपुणाः भवन्ति स्म ते कृष्टराधिरुपजीवनीयाश्चोच्यन्ते स्म।

---

१. अथर्व सं. - १२.१.२२
२. अथर्व सं. - ३.१७.०४
३. अथर्व सं. - ३.१७.१
४. अथर्ववेद सं. - ८.१०.२४

वैदिककाले कृषिविज्ञानविशेषज्ञाः 'अन्नविद्' शब्देनाहूयन्ते स्म। त एव वैज्ञानिकाः कृषिकर्मणः नियमानां प्रतिपादनमपि कृतवन्तः। तदुक्तमथर्ववेदे–

"यद्यामं चक्रुर्निखनन्तो अग्रे कार्षीवणा अन्नविदो न विद्यया।"[१] वस्तुतः कृषिकार्यमिदं मानवकल्याणस्य साधनं मन्यते तस्मादेव यजुर्वेदे राज्ञः प्रमुखं कर्म एतदेवोक्तम्। तद्यथा–"कृष्यैत्वा क्षेमायत्वा रय्यैत्वा पोषायत्वा[२] अनेन मन्त्रवाक्येनैतद् स्पष्टं भवति यद्राजा कृषिमुन्नयित्वा जनकल्याणं कुर्यात् तथा च तेनैव कर्मणा धनं धान्यं च वर्द्धयेत्।

शतपथब्राह्मणे सम्पूर्णमिदं कृषिकार्यं चतुर्भिश्शब्दैर्वर्णितमस्ति। यथा–"कृषन्तः वपन्तः, लुनन्तः मृणन्तश्च[३] इति। एषां चतुर्णामपि श्रौतवचनानां वर्णनमत्राधः प्रस्तूयते–

१. कृषन्तः– कर्षणं कुर्वन्तः खनित्रेण खननं, वृषभं हले नियोज्य क्षेत्रकर्षणं वा प्रथमं कर्त्तव्यं भवति। एतदर्थं गौ-वत्सादीनां पालनं पोषणञ्चावश्यकं मन्यते स्म। यतो हि साम्प्रतं तु ट्रैक्टरयन्त्रेण क्षेत्रकर्षणं विधीयते परं वैदिके काले टैक्टरयन्त्रस्थाने हलयन्त्रस्योपयोगो भवति स्म। एतदेवावलोक्याधुनिका इतिहासविदः एवमुद्घोषं कृतवन्तः यदार्याणां प्रमुखं कार्यं पशुपालनमासीत्। पशुपालनस्य हेतुः किमासीत् तन्न स्पष्टीकृतवन्तः यतः तद्विषये ते न जानन्ति स्म। अत एवोच्यते यद्धेतुमज्ञात्वैव यदि किमपि तथ्यं वयमेवमेवारोपयामः चेदेतादृशी भ्रामिकी स्थितिरुत्पद्यते।

२. वपन्तः– वपनं कुर्वन्तः क्षेत्रनिर्माणानन्तरं तत्र ब्रीहियवादीनां सस्यानां बीजारोपणं काले काले जलस्योर्वराशक्तेश्च प्रक्षेपणं कृत्वा सस्यपालनं पोषणं च कुर्वन्ति स्म। मध्ये कीटनाशकौषधीनां प्रयोगोऽपि कुर्वन्ति स्म।

३. लुनन्तः– लवनं कुर्वन्तः यदा सस्यं पूर्णतया पक्वं भवति स्म तदा तस्य कर्तनं, संग्रहणं च कृत्वा क्षेत्रात् स्वगृहपार्श्वे नयन्ति स्म। एतत्कर्त्तनादिकं कर्म लवनमित्युच्यते।

४. मृणन्तः– मर्दनं कुर्वन्तः = क्षेत्रात् पक्वमानीतं सस्यं पुनर्मर्दनविधिना कृषकैः तन्तुषादिभिरपद्रव्यैः पृथक्कृत्य स्वच्छं कृत्वा सस्यप्राप्तिः क्रियन्ते स्म।

ऋग्वैदिकमन्त्रानुसारमेतत्तथ्यमुद्घाटितम्भवति यत्पृथिव्यां कृषिविद्यायाः विकासाय सर्वप्रथमं देवगणाः (पुरुषार्थी विद्वांसः) स्वं स्वं परशुं धृत्वा प्रजाजनैस्सहागतवन्तः। ते परशुप्रयोगेण वनानि छित्वा तृणानि दाहयित्वा च भूमिं कृषियोग्यमकुर्वन्। तदुक्तं ऋचि–

---

१. अथर्व. सं. - ६.११६.१
२. शु. य. सं. - ९.२२
३. श. प. ब्रा. - १.६.१.३

**देवास आयन् परशुरविभ्रन् वना वृश्चन्तो अभिविड्भिरायन्।**
**निसुद्रवं दधतो वक्षणासु यत्रा कृपीटमनु तद् दहन्ति।।**[१]

अद्यापि कृषकैरियमेव प्रक्रिया कृषिकर्मण आरम्भे आचर्यते। अतः प्राचीनास्ताः प्रक्रिया अद्यापि सापेक्षाः सन्ति। नात्र काचिद्विप्रतिपत्तिरिति मामकीनं मतम्।

वैदिकसाहित्यस्यालोडनेनेदं ज्ञायते यद्वेननामकस्य राज्ञः पुत्रः पृथी कृषिविज्ञानस्य प्रथम आविष्कर्ताऽस्ति। यथोक्तमृग्वेदे–

**"पृथी यद् वां वैन्यः"**[२]

अथर्ववेदेऽपि अस्य कथनस्य स्पष्टसङ्केतो लभ्यते। तद्यथा–

**तस्या मनुर्वैवस्वतो वत्स आसीत् पृथिवी पात्रम्।**
**तां पृथी वैन्योऽधोक् तां कृषिं सस्यं चाधोक् ।।**[३]

अर्थाद्वेनस्य पुत्रः वैन्यः पृथुः सर्वप्रथमं कृषिकार्यम् अस्यां भूमौ आरब्धवान्। तया कृष्या च स विविधानि सस्यानि (अन्नानि) उत्पादितवान्।

ऋग्वेदोक्तमन्त्रेण इदं स्फुटं भवति यदियं पृथिवी दृढा (कठोरतमा) अस्ति। तद्यथा–**येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं येन नाकः।।"**[४] अर्थात् येन 'क' संज्ञकेन परब्रह्मपरमात्मनेयं पृथिवी दृढीकृता, द्यौरुग्रा, तेनैव च स्वर्लोकस्य स्तम्भनं कृतमिति। अत्र कठोरतमस्वरूपा पृथिव्यैवोक्ता। तस्मात् कठोररूपायामस्यां पृथिव्यां सस्योत्पादनाय तस्याः स्वरूपपरिवर्तनमावश्यकम्मत्वा शतपथब्राह्मणे कृषिकार्यार्थं प्रथमतया कर्षणशब्दस्य प्रयोगो विहितः। यतो हि कस्मिंश्चिदपि कठोरतमे पदार्थे मृदुलत्वमुत्पादनाय द्विविधप्रयोगः क्रियते कर्षणं घर्षणञ्च। कर्षणघर्षणाभ्यां मृदुलत्वं सम्भवतीति श्रेष्ठतमः सिद्धान्तः। तस्यैव सिद्धान्तस्य परिपुष्टिरत्र श्रौतग्रन्थेषूपलभ्यते।

अद्याप्येषा प्रक्रिया सर्वत्रानुपालनीयाऽस्ति। सर्वत्र कृष्यादौ कर्षणं, जलसिञ्चनञ्च विधीयते। जलसिञ्चनाय (तदानीं) गंगा-यमुना-सरस्वती शुतुद्री-विपाशाऽऽदीनां नदीनां नामानि वेदेषु श्रूयन्ते।[५] सरस्वत्यास्तटे देवाः माधुर्यरसगुम्फितस्य यवस्योत्पादनं चक्ररित्युल्लेखोऽथर्ववेदे प्राप्यते। तद्यथा–

---

१. ऋ. सं. - १..२८.८
२. ऋ. सं. - ८.९.१०
३. अथर्व सं. - २.१०.१० तथा ११
४. ऋ.सं. - १०.१२१.५
५. इमं मे गंगे यमुने सरस्वती.....ऋ.सं. - १०.७ ५.५

**इमं देवा मधुना संयुतं यवं सरस्वत्यामधि मणावचर्कृषुः।**
**इन्द्र आसीत् सीरपतिः शतक्रतुः कीनाशा आसन् मरुतः सुदानवः।।**[१]

अर्थात् कृषिकर्मणि इन्द्रः स्वयमधिष्ठातुर्मरुतश्च कृषकस्य कार्यं कृत्वा सरस्वतिनद्यास्तटे सस्योत्पादनक्षमतासम्पन्नायां भूमौ मधुररसोपेतस्य यवस्य वपनं कृतवन्तः। अनेन मन्त्रेणेदं तथ्यमस्माकं पुरतः स्फुटं भवति यत्कृषिकार्यार्थं सर्वप्रथमं सरस्वत्यास्तटवर्ति भूमिरेव चिता। तथ्येऽस्मिन् वास्तविकताऽपि विद्यते यद् 'सरस्+वती' वतुप् प्रत्ययस्य प्रयोगः प्रचुरतायाः द्योतनार्थं क्रियते। यथा धनवती, भगवती, एवमेव सरस् = तरलपदार्थेन युक्तः प्रचुरतया सम्पन्नतायै वतुप् योगः तस्मात् 'सरस्वती'। हलन्तप्रयोगात् सकारस्यार्द्धत्वमेव गृह्यते, अतः सरस्वती एव शुद्धः रूपः। बीजवपनानन्तरं क्षेत्रे सामर्थ्यवर्धकानां कीटनाशकतत्त्वानां प्रयोगोऽन्नानां संरक्षणाय सम्बर्धनाय च जलस्योपयोगः क्रियते स्म।

**अन्नानां प्रकाराः**

वस्तुतः अन्नानां प्रकारद्वयमुक्तम्[२] (१) कृष्टपच्यम्- कृष्योत्पद्यमानं यथा- यव-ब्रीहि-गोधूमादीनि। (२) अकृष्टपच्यम्-कृषिं विनोत्पद्यमानं यथा-वन्यधान्यानि।

द्वितीयया दृष्ट्याऽपि अन्नानां प्रकारद्वयं वर्णितमस्ति- (१) वर्ष्यम्- वर्षाजलेनोत्पद्यमानम्। (२) अवर्ष्यम्- कूप-तडागनद्यादीनां जलेनोत्पद्यमानमन्नम्।

लवनदृष्ट्या प्राप्यमाणान्यन्नानि चतुष्प्रकारकानि भवन्ति। तानि यथा-

(१) ग्रीष्मर्तौ लवनीयानि- गोधूम, यवादीनि मुख्यानि सन्ति।

(२) वर्षर्तौ लवनीयानि- शाक-व्यञ्जनानि, भदई ब्रीह्यादीनि।

(३) शरदर्तौ लवनीयानि- ब्रीहि आदीनि।

(४) हेमन्त शिशिरयोः लवनीयानि माष-तिल-खल्वादीनि।

**अन्ननामानि**

यजुर्वेदस्य माध्यन्दिन-तैत्तिरीयसंहितयोः द्वादशविधानामन्नानां नामानि सन्त्युल्लिखितानि। यथा-

"ब्रीहयश्चमे यवाश्चमे माषाश्चमे तिलाश्चमे मुद्गाश्चमे खल्वाश्चमे प्रियङ्गवश्चमेऽणवश्चमे श्यामाकाश्चमे नीवाराश्चमे गोधूमाश्चमे मसूराश्चमे यज्ञेन कल्पन्ताम्।"

१. अर्थवसं. ६.३०.१
२. शु.यं.सं. - १८.१२ ; तै.सं. - ४.७.४.२

ब्रीहि-यव-माष-तिल-मुद्ग-खल्व-प्रियङ्गु-अणु-श्यामाक-नीवार-गोधूम-मसूरसंज्ञकानि द्वादशधान्यनामानि। तैत्तिरीयसंहितायाम् एतदतिरिक्तान्यप्यन्नान्युक्तानि तानि यथा–

(१) कृष्णब्रीहिः अस्याः तुषा कृष्णवर्णा ओदनञ्च रक्तवर्णं भवति।

(२) आशुब्रीहिः– संभवतः इयं साठीति उच्यते। शीघ्रं पक्वमानमन्नम्। अस्याः ब्रीह्याः कृते आचार्यपाणिनिः षष्टिकाशब्दस्य प्रयोग अकरोत्।[1]

(३) महाब्रीहिः– दीर्घकायमिदमोदनम्। अधुना वासमतीत्युच्यते।

(४) गवीधुक्– इदमारण्यं गोधूमान्नम्। शतपथब्राह्मणे एतस्य कृते गवेधुक्शब्दस्य प्रयोगो दृश्यते।[2]

बृहदारण्यकोपनिषदि दशप्रकारकाणां ग्राम्यधान्यानां नामान्युक्तानि सन्ति। तानि यथा–

१. ब्रीहि, २. यव, ३. तिल, ४. माष, ५. अणु, ६. प्रियङ्गु, ७. गोधूम, ८. मसूर, ९. खल्व, १०. खलकूलानि च।[3]

इत्थमनेकेषामन्नानां नामानि वैदिकसाहित्येषूपलभ्यन्ते। एषाम् अन्नानां परिज्ञानायैव कार्त्तिकशुक्लप्रतिपदि 'अन्नकूट' नामक उत्सवः आयोज्यते। तदानीं षट्पञ्चाशत् प्रकारकानि भोज्यपदार्थानि निर्मीयन्ते। देवतानां सविधे भोगार्थं स्थाप्यन्ते च। अनेन पर्वोत्सवविधानेन भारतीयकृषिपरम्परायाः बोधो जायते। कीदृशं तत्र नैपुण्यमित्यपि स्पष्टरूपेण परिलक्षितम्भवति। परमद्य भारतीयाः पाश्चात्यपद्धतिमनुसृत्य स्वं गौरवं स्वयमेव विनाशितवन्तः। ते बीजहीनाः वीर्यरहिताश्च सञ्जाताः। अन्येषां बीजैर्बीजवन्तो भूत्वा कथं भारतीयपरम्परां वर्धयितुं समर्थाः भवितुमर्हन्ति।

कृषिविज्ञानस्येदमेव माहात्म्यमुद्घोषयन् स्वयं ऋग्वेदो निगदति–

"अक्षैर्मा दीव्य कृषिमित् कृषस्व" अर्थात् अक्षक्रीडां मा कुरु कृषिकार्यमेव करोतु। अस्मिन् मन्त्रवाक्येऽपि कृषिकर्मणां माहात्म्यमुपवर्णितमस्ति। तस्मादुच्यते-भारते कृषेः प्राधान्यमस्ति।

एतदतिरिक्तं कृषिसम्बन्धिनोऽन्येऽपि विविधाः विषयाः वेदेषु वैदिकसाहित्येषु च सम्यगुपवर्णितास्सन्ति। समेषामत्रोल्लेखस्त्वसम्भवः। तस्मादत्रैव लेखनीं विरम्यते। इत्यलम्।

---

१. अष्टाध्यायी - ५.१.९०

२. श. प. ब्रा. - ९.१.१.८

३. दश ग्राम्यधान्यानि - वृहदा. - ६.३.१३,

# हस्तयोरर्घ्यं मूर्ध्नि वा

**डॉ० उमेशचन्द्रमिश्रः**

"अर्ह" पूजायामिति भ्वादौ वा चुरादिगणपठितधातोः "हलश्च"[1] इति सूत्रेण "घञ्" प्रत्यये "न्यङ्क्वादीनां च"[2] सूत्रेण कुत्वनिपातनेऽर्घशब्दस्य निष्पत्तिर्भवति। अर्घपदार्थः "पादार्घाभ्यां च" सूत्रे काशिकायां पदमञ्जरीकारेण हरदत्तेन निरूप्यते यद्– "गन्धोदकसमवायोऽर्घः"। अतः कर्मकाण्डेष्वर्घ-निर्माणविषये उच्यते "गन्धपुष्पाक्षततिलकुशशुभ्रसर्षपदधिदुर्वान्वितं सुवर्णादिपात्रस्थमर्घार्थमुद्रकम्"। अर्घपादर्थं नामलिङ्गानुशासने प्रतिपादयति अमरसिंहः "मूल्ये पूजाविधावर्घः"। सनातनधर्मस्य पूजायार्विधेः नाम उपचारः। उपचारशब्दार्थे ज्ञानमालायामुक्तः–

**भक्त्या चैते कृता देवे साधकं देवसन्निधिम्।**
**चारयन्ति यतस्तस्मादुच्यन्ते ह्युपचारकाः।।**

**समीपे चारणाद्वापि फलानान्ते तथोदिताः।**[3]

शास्त्रेषु अष्टत्रिंशत् षोडशाऽर्कदशपञ्चोपचारकाः लभ्यन्ते। अष्टत्रिंशदुपचाराः एवं भवन्ति। यथा–

**आसनं प्रथमं तेषामावाहनमुपस्थितिः।**
**सान्निध्यमाभिमुख्यं च स्थिरीकृतिप्रसाधनम्।।**

**अर्घ्यं च पाद्याचमने मधुपर्कमुपस्पृशम्।**
**स्नानं नीराजनं वस्त्रमाचामं योपवीतकम्।।**

**पुनराचामभूषे च दर्पणालोकनं ततः।**
**गन्धपुष्पे धूपदीपौ नैवेद्यञ्च ततः क्रमात्।।**

---

१. पाणिनीयाष्टाध्यायी - सू. सं. - ३.३.१२१
२. पाणिनीयाष्टाध्यायी - सू. सं. - ६-३.५३
३. शारदातिलके - चतुर्थपटले. टिप्पण्याम् श्लो. सं. १५

**पानीयं तोयमाचामं हस्तवासस्ततः परम्।**
**ताम्बूलमनुलेपं च पुष्पदानं पुनः पुनः।।**

**गीतं वाद्यं तथा नृत्यं स्तुतिं चैव प्रदक्षिणम्।**
**पुष्पाञ्जलिनमस्कारावष्टत्रिंशत्समीरिताः।।**[१]

तथैव षोडशोपचाराः यथा–

**स्यादासनं स्वागतमेवपाद्यमर्घस्तथैवाचमनद्वयं च।**
**मध्ये तयोः स्यान्मधुपर्क एकः स्नानं च वासं च विभूषणं च।।**
**गन्धं पुष्पं धूपदीपौ नैवेद्यं कार्पण्योक्त्या।**
**वन्दनं देवताग्रे ज्ञेया हि एते षोडशोपचाराः।।**[२]

तथैव आसनं स्वागतं वस्त्रभूषेत्युक्ता तु द्वादशोपचाराः। अर्घ्यपाद्याचमन्येव मधुपर्काचमन्यपि गन्धादयो निवेद्यान्ता क्रमात् दशोपचाराः। गन्धपुष्पौ धूपदीपौ नैवेद्यं च पञ्चोपचाराः। इतोऽपि श्रूयते आदौ ब्रह्मणः पूजायां सहस्रमुपचारा आसन्। शतमुपचाराः पृथुना कृतम्। चतुःषष्ठिरिन्द्रेण नारदेन द्वात्रिंशदुपचारा नहुषेन चतुर्विंशतिः तथाऽस्मिन् युगे खलु आचार्याः षोडशोपचारैः पूजयन्ति देवान्। तत्राऽपि लाघवाय जनाः दशोपचारैः पञ्चोपचारैरर्चयन्ति च। अत्र अर्घदानस्य विधानं दशोपचारपर्यन्तं वर्तते। येभ्योऽर्घः दीयते वाऽर्घार्थं यदस्ति उदकं तस्मिन्नर्घ्यशब्दस्य प्रयोगो भवति। अत्र अर्घशब्दात् "पादार्घ्याभ्यां च" ५-४-२५ पाणिनीयसूत्रेण 'यत्' प्रत्ययेऽर्घार्थमुदकमर्घ्यं वा अर्घमर्हतीति अर्घ्यः। शास्त्रे केवलं षडर्घ्याः भवन्ति। तद्यथा पारस्करगृह्यसूत्रे–

षडर्घ्या भवन्त्याचार्यर्त्विग् वैवाह्यो राजाप्रियः स्नातकः। प्रतिसम्बत्सरानर्हयेयुः। न सम्बत्सरादर्वाक्।

अतः आचार्यः, ऋत्विक्, वरः, राजा, मित्रम्, स्नातकः एते एवाऽर्घार्हाः भवन्ति। एतेषां आगमनं वर्षेषु एकवारं भवति चेत् तर्हि तेभ्योऽर्घ्यं दीयते। एकाधिकवारागमनेन तेऽर्घ्यार्हा न भवन्ति। इति व्यवस्था पारस्करे वर्तते। पूजायां त्रिधाऽर्घो भवति। स च उपचारार्घः, सामान्यार्घः विशेषार्घश्चेति। उपचारार्घस्य विधानं साधकेन देवस्यागमनविश्रान्तिनिवारणार्थं क्रियते। यथोक्तं गौतमीये वैष्णवतन्त्रे–

**गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपान्**
**दूर्वाभिर्देवशिरसि शिरोमन्त्रेण चार्पयेत्।**
**एतदर्घ्यमिदं प्रोक्तं तुष्टये शार्ङ्गधन्वनः**

---

१. शारदातिलके - चतुर्थपटले - टिप्पण्याम्
२. सूरिसर्वस्वे - द्वात्रिंशः संग्रहे - श्लो. सं. १२.१३

**तापत्रयहरं दिव्यं परमानन्दलक्षणम्।**
**तापत्रयविमोक्षाय तवार्घ्यं कल्पयाम्यहम्।।**[१]

अतः तापत्रयाणां विनाशायोपचारेऽर्घ्यास्य दानं भवति। सामान्यतया कर्मकाण्डे उच्चार्यते "पादयोर्पाद्यं हस्तयोरर्घ्यं मुखे आचमनीयं सर्वाङ्गे स्नानीयं समर्पयामि"। अर्थाद् अर्घ्यस्य समर्पणं देवताया हस्तयोर्भवति। अस्मिन् विषये प्रश्नः समुदेति यदि हस्ताभ्यामर्घ्यं दीयते तस्य कोऽभिप्रायः यदि च हस्तप्रक्षालनार्थं तर्हि तस्मिन् भवतण्डुलकुशाग्रादीनां स्थापने कोऽर्थः। एवञ्च सूर्यार्घ्यस्य का प्रासङ्गिकता, विवाहेऽर्घोऽर्घोऽर्घः मन्त्रेण वरायार्घः कथं दीयते?

विषयेऽस्मिन् मया मम पितृचरणैः पण्डितश्रीकेशवचन्द्रमिश्रशर्मभिः सह चर्चा कृता। तेषां सिद्धान्तः आसीदर्घः कदाचिद् हस्तयोर्न भवति। सर्वदा देवतायाः शिरसि अर्घ्यस्य समर्पणं भवति। अत्र तैः बहूनि प्रमाणानि प्रस्तुतानि। विदुषामवलोकनार्थं तानि अधः प्रस्तूयन्ते। आदौ यथा शारदातिलके-

**अर्घ्यं दिशेत् ततो मूर्ध्नि शिरोमन्त्रेण देशिकः**
**गन्धपुष्पाक्षतयवकुशाग्रतिलशर्षपैः**
**सदूर्वैः सर्वदेवानामेतदर्घ्यमुदीरितम्।**[२]

अतः देशिकोपासकः शिरोमन्त्रेण स्वाहापदेन "अर्घ्यै स्वाहा" इत्युचार्य देवताया मूर्ध्नि अर्घ्यमर्पयेत्। तथैव वैष्णवतन्त्रेषु सनत्कुमारतन्त्रे-

**अर्घ्यं दिशेत् ततो मूर्ध्नि शिरोमन्त्रेण देशिकः**
**गन्धपुष्पाक्षतयवकुशाम्बुतिलशर्षपैः**
**दूर्वाभिः सर्वदेवानामेतदर्घ्यमुदीरितम्।।**[३]

गन्धर्वतन्त्रेऽपि देव्यै अर्घ्यसमर्पणविषये-

**अर्घ्येण लभते कामान् अर्घ्येण लभते धनम्।**
**पुत्रायुः सुखमोक्षाणि दानादर्घ्यस्य वै लभेत्।।**

**पूर्वसंस्थापितेनैव शङ्खेन विधिना स्वयम्।**
**श्वेतसर्षपमुद्गाभ्यां तिलक्षीरैस्तथा यवैः।।**

---

१. गौतमीये तन्त्रे - दशमेऽध्याये
२. शारदातिलके - चतुर्थपटले - श्लो. सं. - ८८
३. सनत्कुमारतन्त्रे - चतुर्थपटले - श्लो.सं. - १८

**रक्तचन्दनशपुष्पैश्च त्रिपुरायै महेश्वरि।**
**निधाय पुरतो दद्यादर्घ्यमन्त्रेण साधकः।।**

**अर्घ्यमर्घ्यमिदं देवि! मया भक्त्या निवेदितम्।**
**सजलं शङ्खपात्रस्थं गृहीत्वा मूर्ध्नि योजय।।**[1]

तथैवानन्दाकल्पतन्त्रे–

**पाद्यं चरणयोर्दद्यात् शिरस्यर्घ्यं निवेदयेत्।**
**स्वाहामन्त्रेण मतिमान् स्वधेत्याचमनीयकम्।।**[2]

एवं च सूरिसर्वस्वे–

**पृष्ट्वा शोभनमागतं च कुशलं तेषां विनीतोक्तिभिः**
**पादाम्भोजयुगे निवेद्य च ततश्चानीय पादोकम्।**
**दर्भैरर्घ्यजलं प्रसिच्य शिरसि त्रिश्चाचमनमर्पये**
**च्छुद्ध्यर्थं रसमुद्रया च मधुपर्कं त्रिः मुखान्तः क्षिपेत्।।**[3]

विश्वामित्रसंहितायाम्–

**यजाम्यर्घ्यादिभिर्भोगैस्तांजुषस्व कृपां मयि**
**इति विज्ञाप्य शिरसा प्रणम्यार्घ्यं तु मूर्ध्नि।**[4]

शैवतन्त्रेषु मेरूतन्त्रे–

**ततोऽर्घ्यं मूर्ध्निं दद्याच्च कालोऽस्य त्रिविधो मत।**
**आगतायां तथार्चायां स्नातुमासनगाय च।**
**पूजान्ते गन्तुकामाय देवायार्घ्यं प्रदापयेत्।**
**अर्घ्यद्रव्ययुतैस्तोयैरुपचारमनु पठन्।।**[5]

अत्र सर्वत्र देवतायाः शिरसि अर्घ्यं प्रदापयेदिति विधानमस्ति। किं वा अन्यत् विचारयाम उपचारऽमुं मन्त्रं पठन्नर्घ्यजलं निवेद्यते। यथोक्तं सूरिसर्वस्वे–

---

१. गन्धर्वतन्त्रे - पञ्चदशपटले - श्लो. सं. ६,१०,११,१२
२. अन्त्रेदाकल्पतने - त्रयोदशपटले - श्लो. सं. ११
३. सूरिसर्वस्वे - द्वात्रिंशः संग्रहे - श्लो. सं. १८
४. विश्वामित्रसंहितायाम् - दशमेऽध्याये. श्लो. सं. २४
५. मेरुतन्त्रे - पञ्चमप्रकाशे श्लो. सं. २२

**मूर्ध्नि विभूतिनिजाधनुत्तये यत्पदार्हणपयः शिवादयः।**
**तस्य ते शिरसि सेचनाय मे कल्पितोऽर्घ इह देव! गृह्यताम्।।**[१]

विवाहदर्पणेऽपि कन्यापिता कन्याया विवाहार्थमागतस्य वरस्य षडर्घ्यकर्मारम्भेऽर्घ्यपात्रं गृहीत्वाऽर्घोऽर्घोऽर्घ्यः प्रतिगृह्यतामिति वदति। प्रतिगृह्णामीति वरः। आपस्थः शुष्माभिः सर्वान् कामानवाप्नवानि। इति वामहस्तेऽर्घ्यपात्रं गृहीत्वा दक्षिणहस्तेन शिरसि त्रिवारं सिञ्चेत्। इति मन्त्रेण–

ॐ सद्रमुं वः प्रहिणोमि स्वां योनिमधिगच्छत अरिष्टास्मि। कं वीरमपरा सेचिमत्पयः। इति पठित्वा अर्घ्यशेषं मूर्द्धपर्यन्तमानीय भूमौ निक्षिपेतिति विहितमस्ति। सूर्याय यदर्घ्यं दीयते तत्राऽपि अर्चकः स्व कल्पनायां सूर्यं ध्यात्वा तस्य शिरं प्रकल्प्यार्घ्यं समर्पयेत्।

अर्घ्यपात्रस्य स्वरूपं कथं भवेत् एतस्य निर्णयः यथा सूरिसर्वस्वे–

**ताम्बुलपत्राकृतिमध्यदेशं गोकर्णवन्मञ्जुगभीरगर्भम्।**
**अम्भोजलक्ष्मान्वितनाभिशोभि ताम्रादिनार्घस्य मतं हि पात्रम्।।**[२]

अत्राऽपि ब्राह्मणस्य कृते कांश्यपात्रं वा ताम्रपात्रं क्षत्रियस्य कृते रौप्यपात्रं वैश्यस्य कृते स्वर्णपात्रं प्रयोज्यमिति निर्दिष्टमस्ति। एतस्य पात्रस्य आकारविषये वर्णितं सूरिसर्वस्वे–

**भवेत्पात्रं शस्त्रं यदि विरचितं द्वादशपलैः**
**पलै ष्षड्भिर्न्यूनं त्रिपलमुदितं चाधमतया।**
**अशक्तौ तस्यार्द्धं कथमपि तदर्घं विरचयेत्पलान्न्यूनं**
**न स्यात्किमपि चषकं काञ्चनमृते।**

**उत्तमं भवति षोडशाङ्गुलं द्वादशाङ्गुलमुशन्ति मध्यमम्।**
**अन्तिमं खलु दशाङ्गुलं तथाष्टाङ्गुलं चतुराङ्गुलावधि।।**[३]

अतः एभिः प्रमाणैः ज्ञायतेऽर्घदानं मूर्ध्नि एव भवति। हस्तयोरर्घ्यं केवलं भ्रममात्रम्।

---

१. सूरिसर्वस्वे - त्रिंशःसंग्रहे - श्लो. सं ३६
२. सूरिसर्वस्वे - द्वाविंशः संग्रहे - श्लो. सं. ३६
३. सूरिसर्वस्वे - द्वाविंशः संग्रहे श्लो. सं. - ३१, ३२

# पाणिनिशब्दशास्त्रे लोकन्यायानां प्रयोगः

**डॉ. महेशकुमारद्विवेदी**

षडङ्गेषु प्रधानं व्याकरणम्। प्रधाने कृतो यत्नः फलवान् भवतीति भाष्यकारोक्त्या मध्यमानादाभिव्यङ्ग्यध्वनिरूपरूसितवैखरीनादप्रयुक्तस्यास्य शब्दशास्त्रस्यैवाभिव्यक्तेयं वाणी लोके असाधुशब्दावधिकसाधुशब्दकर्मकपृथक्कृतिप्रयोजकधर्मवत्वं व्युत्पादयति। गावी गोणी-गोता- गोपोतलिका इत्यादिप्रयुक्तेषु लौकिकशब्देषु कश्चनान्यतमो गोशब्दः साधुरित्येवप्रतिपादनपरस्यास्य शास्त्रस्य शब्दशास्त्रत्वेन प्रसिद्धिः।

न लोकाद् भिद्यते शास्त्रमिति रीत्या लोकस्तु प्रथमः पश्चाच्छास्त्रमन्यथा कस्योपरि नियमः सम्भवेत्, शासनकरणता कस्य वा स्यादित्यनेन समेषां शास्त्राणां लोकानुरूपा प्रवृत्तिर्दरीदृश्यते। अथर्ववेदे दैवीवाक् मानुषीवाक् च द्विधा समन्विता दृशोर्विषयता समायाति। उक्तं हि-

"अहं सत्यमनृतं यत् वदामि। अहं दैवीं परिवाचं विशश्च"[१] अत्र सत्या दैवीवाक् सा च वैदिकी। असत्या=सर्वतः प्रसृता मानुषी वाक् च लौकिकी निगद्यते। अत एव ब्रबीति भाष्यकारः लौकिकानां वैदिकानाञ्च शब्दानां शब्दानुशासनेन धर्मनियमः क्रियते। निरुक्ते दुर्गाचार्यवृत्तौ अष्टविधशाब्दिकानां निर्देशः प्राप्यते-तथा हि-

**इन्द्रश्चान्द्रः काशकृत्स्नाऽपिशली शाकटायनः।**
**पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ च शाब्दिकाः।।**[२]

अत्र पाणिनिप्रणीतां अष्टाध्यायीं सविशेषां वयं स्वीकुर्मः। सा हि उभयविधलोक-वेदप्रवृत्तिसाधीयसी। पाणिनिव्याकरणे स्वयमेव शाकल्य-शाकटायन-स्फोटायनसेनकादीनां पुरोवर्तिशाब्दिकानां निर्देशो मिलति। साम्प्रतं समेऽपि शास्त्रप्रणेतारः पाणिनिव्याकरणशास्त्रस्यैव सर्वश्रेष्ठत्वं मन्यन्ते। अतोऽत्र पाणिनिव्याकरणे तद्विस्तारभूते त्रिमुनियुते व्याकरणे शाब्दबोधनिष्पत्त्या, पदपदार्थावगमस्यावश्यकत्वेन

---

१. अथर्ववेदे ६.६१.२१

२. वोपदेव कविकल्पद्रुमे

तस्य च व्याकरणाधीनत्वात्तेषु वेदाङ्गेषु व्याकरणस्यैव आस्यत्वेन प्राधान्यं तिष्ठति। तदुक्तं भर्तृहरिणा-

**अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।**
**तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते।।**[१]

व्याकरणे सुप्रसिद्धमिदमाभाणकं यत् अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः। इत्यत्र पुत्रोत्सवस्यानन्दो यथा लोके तद्वदत्रापि शाब्दिकलाघवेनानन्दः काम्यते। अत्र प्रक्रियापरमार्थयोर्नितरां विवेचनमादाय सूत्रात्मिकावधारणा स्वयमेव अल्पाक्षर-असन्दिग्ध-सारवदादिविशेषणोपगता। तथा-

**अल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम्।**
**अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः।।**[२]

अतोऽत्र सूत्रवृत्ति-वार्तिक-परिभाषासमन्वितेयं शब्दशास्त्रीया प्रवृत्तिर्लौकिकी वैदिकी च। उभयविधशब्दसिद्धिदशायां यत्र कुत्रचित्। 'शब्दसाधुत्वसम्पादने लोकन्यायाधारिताऽपि संधारितेयं प्रवृत्तिर्लक्ष्यते। इत्थं शब्दसाधुत्वसम्पादनाय प्रक्रियापरमार्थयोश्च तात्त्विकविमर्शनाय ''सिद्धे शब्दार्थसम्बन्धे'' इत्यनेन साधुशब्दप्रयोगः पापनिवृत्तिज्ञानप्रवृत्तिसाधकश्च जायते। ऋते ज्ञानान्नमुक्तिः, ज्ञात्वा एवं मुच्यते सर्वपापैः इति श्रुतेश्च। यथोक्तं हि-

**उपायाः शिक्षमाणानां बालानामुपलालनाः।**
**असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।।**[३]

उपलालनाद्योपायाः वस्तुतः सत्यप्रतियोगिकाभाववन्तः तथापि ते माध्यमीभूताः परमार्थप्राप्तौ। ज्ञातारः परमार्थतत्त्वसाक्षात्काराय ये हि उपाया ब्रुवन्ते यत्र प्रयोगे च सूत्राणां प्रवृत्तिर्भविष्यति नवेत्यत्र नियमाकाभावे शब्दसाधुत्वान्वाख्यानहेतोरत्र शब्दशास्त्रे लोकन्यायानाश्रित्य सूत्राणां पारस्परिकबाध्य-बाधक-विचारेण लक्ष्यात्मकं शब्दसाधुत्वं संपादितमत्र शास्त्रे।

अस्त्यस्मिन् व्याकरणे भगवतः पतञ्जलेर्महाभाष्यं यत्र हि भाष्यकृता बहवो लोकन्यायाः समुद्घाटिताः। प्रयोगनिष्पत्तौ अर्थनिष्पतावपि बहवो लोकन्यायाः स्वीकृताः। सर्वाङ्गीणभाष्यविलेखने एव एतन्महाभाष्यमिति व्यवहारः। स्वयमेव भाष्यकारो ब्रबीति सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्।

न्यायो नाम निर्णय उक्तिर्वा। न्यायदर्शने प्रतिज्ञादिवाक्यपञ्चकं न्यायः प्रमाणैरर्थपरीक्षणं वा न्यायः षोडशपदार्थेषु संशयप्रयोजनदृष्टान्तवत्-लोके यथा राजतंत्रीयव्यवस्थायां पञ्चसरपञ्चमाध्यमेन

१. वाक्यपदीयम् ब्रह्मकाण्डे कारिका १३
२. वैयाकरणसिद्धान्तकौमुदी तत्त्वबोधिन्यां प्रयुक्ता सूत्रपरिभाषा।
३. वाक्यपदीयम् वाक्यकाण्डम्

न्यायपरिकल्पना लोके समाश्रिता सा च यथार्थसत्वात्मिका तथैव लोकन्यायाः लोकोक्तय लोकानुभवसिद्धा एवात्र लोकन्यायपदेनेष्टाः। लोकन्यायानां प्रयोगो महाभाष्ये आयातो बहुतरः परिभाषेन्दुशेखरे नागेशेन परिभाषारूपाणां तेषां संग्रहो व्यधायि। तास्तु परिभाषासु काश्चन शास्त्रीयाः काश्चन च लोकन्यायानुप्राणिताः महाभाष्यपरिभाषेन्दुशेखरयोरन्तरं भर्तृहरिणाऽपि वाक्यपदीये लोकन्यायानां प्रयोगः कृतः। किंत्वादिग्रन्थेषु समागतेषु न्यायेषु केषाञ्चित् प्रसिद्धानां प्रयोगश्चात्र मया संसाधितः। केचन प्रसिद्धा न्याया-माठरपरिवेशषणन्यायः उत्सर्गापवादन्यायः गुप्तचरन्यायः चम्पकपुष्पिकान्यायः, जलतुम्बिकान्यायः, मण्डूकप्लुतिन्यायः, सूत्रशकटन्यायः प्रदीपन्यायः, भुक्तभोजननिषेधन्यायः, पर्जन्यल्लक्षणन्यायः, स्थालीपुलाकन्यायः, शिशुकभिक्षुकान्यायः, राजतक्षन्यायः, बृद्धकुमारीवरन्यायः, काकतालीयन्यायः **शास्त्रीयाः नागोजिप्रयुक्ताः न्यायाः**- सूचीकटाहन्यायः अर्धजरतीयन्यायः, रेखागवयन्यायः, खलेकपोतन्यायः, राजपुरप्रवेशन्यायः, गोबलीवर्द्रन्यायः एते न्यायाः शाब्दिका, शास्त्रान्तरीया वेत्यपेक्षा सर्वथा वक्तुं नोत्सहे। परञ्च समेषां मूलत्वं लोकोक्तिपरमेवावसीयते। लोके यादृशी अपरिहार्यता स्थितिर्वा सामाजिकैः सर्वथानुभूयते तदनुरीत्त्यैव शास्त्रे न्यायत्वरूपावधारणा सिध्यतीति ज्ञायते। यथा चम्पकपुष्पिकान्यायः, इत्या चम्पापुष्पं यत्र कुत्रापि संस्थाप्यते तदा तत्काले तदपवारणेऽपि यथा तस्य सौगन्धिस्तदवस्था तथैव शास्त्रेऽपि अवग्रहस्य स्थितिः सम्पद्यते एतत्तु लोकन्यायसिद्धम्। विस्तरेण प्रस्तुता अत्र न्यायाः-

१. **माठरपरिवेषणन्यायः** - न्यायस्यास्य प्रवृत्तिः पातञ्जलमहाभाष्ये दृश्यते। ''सर्वे ब्राह्मणाः भोज्यन्तां माठरकौण्डिन्यौ परिवेविषाताम्'' माठरपरिवेषणकाले भोजनक्रिया बाधिता भवति। कथनस्यायं भावो यदेककालावच्छेदेन एंकस्यैकैव क्रिया सम्भवति। सर्वब्राह्मणत्वेन माठरस्यापि बोधो जायते परन्तु तदनीन्तनस्य भुजि-क्रियायाः बाधसत्वेन भोज्यत्वाप्राप्तिः-व्यवहारसिद्धा। एतन्मूलकत्वाद् सौत्राणां प्रवृत्तिरेकस्मिन् स्थले सामान्यविशेषरूपेण प्रवर्तते। परञ्च विशेषेण सामान्यस्य बाधो भवति। अत एव मद्रह्रदः भद्रह्रदः इत्यत्र ''अचो रहाभ्यां द्वे'' इत्यनेन रेफहकारयोः द्वित्वापत्तिमाशङ्क्य तक्रकौण्डिन्यब्राह्मणद्वयवत् तदानीं परिवेषेणे भुज्यभावबोधः तथाऽत्रापि यर्त्वेन प्राप्तस्य स्थानीत्वस्य निमित्तत्वेन बाधो भवति। एतत्तु-हयवरट् इति सूत्रे भाष्ये[१] व्याख्यातम्। कार्यनुभवन् हि कार्यी निमित्ततया नाश्रीयते इति न्यायः परिभाषेन्दुशेखरे स्पष्टेन प्रयुक्तः। तत्र हि अध्येता शयितेत्यत्र इङ्शीङोर्ङित्वात् ''क्ङिति च'' इत्यनेन गुणनिषेधो न कार्यिणो निमित्ततया अनाश्रयणात्।

२. **उत्सर्गापवादन्यायः** - महर्षिपतञ्जलेरियमुक्तिर्यल्लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते। एतेन लोकसम्मतशास्त्ररीत्या सामान्यविशेषयोः प्रवृत्तिर्ज्ञायते। कश्चित् उत्सर्गः कश्चिच्चापवादः, उत्सर्गेण सामान्यस्य अपवादपदेन विशेषस्य च बोधः। शब्दशास्त्रे यथा ''कर्मण्यण्येतेनसूत्रेण कर्मण्युपपदे धातोरण् प्रत्ययः, तत्रैव, आतश्चोपसर्गे इत्यनेन आकारान्तधातोः

---

१. पातञ्जलमहाभाष्ये पश्पशन्हि्के हयवरट्-सूत्रे

कप्रत्ययो विधीयते। महाभाष्ये पश्पशाह्निके एवं शब्दानां प्रत्तिपत्तिकाले[१] किञ्चित्सामान्यविशेषवल्लक्षणं वक्तव्यमित्यनेन लोकप्रवृत्तितत्त्वमेव पतञ्जलिना संकेतितम्। एतन्यायमूलकमेव सर्वत्रशास्त्रे सूत्रेषु बाध्यबाधकभावो जायते। बाध्यबाधकभावमादाय नागेशेन परिभाषेन्दुशेखेरे चतस्रः परिभाषाः शास्त्रियत्वेनोपन्यष्टाः तद्यथा-पूर्वं ह्यपवाद अभिनिविशन्ते पश्चादुत्सर्गाः, प्रकल्प्य चापवादविषयं ततः उत्सर्गोऽभिनिविशते, अपवादो ह्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते इत्यादयः।

३. **गुप्तचरन्यायः** - न्यायोऽयम् आचार्यरामकिशोरशुक्लमहोदयैर्व्यवहृतः[२] व्याकरणशास्त्रे लौकिकन्यायानामुपयोगः स्वकीये ग्रन्थे तेनोच्यते यत् अइउण, इत्यस्मिन् सूत्रे भाष्यकोरण वर्णसमाम्नायेऽन्यस्मिन् सूत्रे वोच्चरिताकरेण सावर्ण्यबोधाकत्वऽपि अस्यच्वौ इति सूत्रस्थाकारस्य प्रत्याहारप्रत्यायकचिन्हाभावेना नणत्वात् सावर्ण्यग्राहकत्वाभावेन कृष्णी भवति इत्यादौ प्रकृतसूत्रेणेत्वेसिद्धेऽपि गङ्गीभवति इत्यत्राकारस्येत्वं न स्यात् इत्याशङ्क्य लोके यथा एकस्या एव व्यक्तेस्तैलादर्शाद्यनेक-प्रतिविम्बव्यञ्जकवस्तुनो भेदात् प्रतिबिम्बभेदः तर्थवात्रापि वर्णसमाम्नायस्थसूत्रान्तरस्थाकारस्याभेदात् न दोषः। परञ्चात्रानुबंधकृतभेदेप्यभेदस्वीकारेऽनुबंधसङ्करः येन अण्-क प्रत्ययस्थलेऽपि णित्वप्रयुक्त-कार्यापत्तिरूपो दोषः समायाति। तदोषवारणाय भाष्यकारेणोपर्युक्तन्यायः स्वीकृतः इति ध्वन्यते। अत एवोच्यते तेन-नैष दोषः लोकतस्तत्सिद्धम्। लोके यथा कश्चिदेवं देवदत्तमाह, मुण्डोभव, इह जटिलो भव, शिखीभव यर्ल्लिङ्गो यत्रोच्यते तर्ल्लिङ्ग्रस्तत्रोपस्थाप्यते। अयंभाव तथा कश्चित् गुप्तचरः गोपनीयकार्येऽनेकरूपधारकत्वेऽपि व्यक्तेभेदः तथैव लक्ष्यसाधुत्वार्थमनेकानुबंधयुक्तेऽपि न दोषः।

४. **चम्पकपुष्पिकान्यायः** - लोकव्यवहारे यथावलोक्यते यद्यत्र चम्पकपुष्पकस्य संस्थापनं तत्र तदभावेऽपि यथा सुगन्धिस्तदवस्था तथैव शास्त्रेऽपि ''एङः पदान्तादति[३]'' इत्यत्र पूर्वपरयोः स्थाने पूर्वरूपप्रसङ्गे खण्डाकाराकारस्य स्थितिर्ज्ञायते। हरेऽव शिवोऽर्च्यः इत्यादौ प्रयोगे चम्पकपुष्पिकान्यायेन खण्डकारो न जायते। अत एवावग्रहस्य सत्ता तद्योतनैवायं न्यायः। 'उपदेशेऽजनुनासिक इत्' - विरामेऽवसानम् इत्यादौ स्पष्ट एव। न्यायोऽयं सारस्वतपरम्परागतः प्रयुङ्ते।

५. **जलतुम्बिकान्यायः** - अज्झीनं परेण संयोज्यमितिव्यवहारः लौकिक-वैदिकेषु सर्वत्र दृश्यते परन्तु रेफादिवर्णस्योर्ध्वैव गतिर्नाघ इत्यस्मिन् विषये एषो न्यायः प्रवर्तते यत् यथा शुष्का तुम्बिका यथा जलोपरिसंधापने-उपरि-उपर्येव गच्छति नाधस्तथैव जलतुम्बिकान्यायेन रेफस्योर्ध्वे गमनमिति सिध्यति। प्राच्छति, कृष्णर्धि इत्यादौ यद्यप्ययं न्यायो न सार्वत्रिकः तथापि शब्दप्रयोगे रेफस्योर्ध्वं गतिर्विलोक्यते एवातस्तस्योल्लेखोऽत्र प्रासंगिक एवं। परम्परातो व्यवहृयते व्याकरणाध्यापनेऽयं न्यायः।

---

१. व्याकरणमहाभाष्ये पश्पशाह्निके

२. व्याकरणशास्त्रे लौकिकन्यायानामुपयोगः स्वकीये ग्रन्थे आचार्यप्रवरैः रामकिशोरशुक्लमहादयैः व्यवहृतः- पृ. ६-१० अइउणसूत्रभाष्ये विज्ञापितोऽयं न्यायः।

३. वैयाकरणसिद्धान्तकौमुदीसन्धिप्रकरणे सूत्रम्-६-१-१०६।

६. **मण्डूकप्लुतिन्यायः** – सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्त्तनीयं सर्वत्रेति व्याकरणशास्त्रस्य प्रथमः कल्पः। कुत्रचित् किमपि पदं मध्यवर्तिषु सूत्रेष्वसम्बद्धीभूयागामिनी सूत्रे सम्बद्धते यथा–लोके मण्डूकप्लुतिर्भवति मध्यवर्ति स्थानं परित्यज्य अग्रे यातीत्याशयः। तथैवात्रापि शास्त्रे–अभिनिविशश्च' १.४.४८[१] इत्यत्र परिक्रमणे सम्प्रदानमन्यतरस्याम् इत्यतो मण्डूकप्लुत्यान्यतरस्यां ग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात् क्वचिन्न यथा पापेऽभिनिवेशः कारकप्रकरणे सिद्धान्तकौमुदीकारेण सौत्राणामनुवृत्तिप्रसंगे बहुधोच्चारितोऽयं न्यायः। मण्डूकस्य यथा प्लवनं लोके तथैव शास्त्रेऽनुवृत्तिर्ज्ञेया। क्वचिदेव न सर्वत्रेति बुध्यते।

७. **सूत्रशाकटन्यायः** – सम्भाविन्याः संज्ञायाः प्रागेव नाम्ना व्यवहारे कृतेऽयं न्यायोऽवतरति। लोके यथा अवलोक्यते, कश्चिज्जनः सूत्रस्यास्य शाटिकां वयेति व्यवहारं करोति। भाष्यकारेणायं न्यायः सम्प्रसारणसंज्ञाविधायके सूत्रव्याख्यानप्रसंगे[२] शब्दशः व्याहृतः। उक्तं ह्येतेन वर्णसम्प्रसारणपक्षे अन्योन्याश्रयदोषमाशङ्क्य (इग्यणोरुभयोः परस्परापेक्षत्वेन) यणः स्थाने भाव्यमान इक् वृद्धियुक्तो न स्यादेतदर्थं सम्प्रसारणविधायकेन सूत्रेण तस्य सम्प्रसारणत्वमत एव लोके कश्चित्कञ्चित्तन्तुवायमाह–अस्य सूत्रस्य शाटकं वयेति। अतोऽत्र यणः स्थाने प्रयुज्यमान इगेति सम्प्रसारणेनान्योन्याश्रयनिवृत्तिस्तत्र प्रतिपादिता। यद्यप्यत्र अणुदित् सूत्रे भाष्यकरेण भाव्यमानेन सवर्णानां ग्रहणं न इत्युक्तं तथाप्यत्र भाव्यमानोव्युकारः सवर्णान् गृह्णातीति सत्वात् एतद्द्वय–परिभाषादिविवेचनप्रसंगः परिभाषेन्दुशेखरे विस्तरेण व्याख्यातो नागेशेन।

८. **देहलीदीपकन्यायः** – लोकन्यायोऽयं भाष्यकारेण षष्ठीस्थाने योगा इति सूत्रभाष्यप्रसंगे संकेतितः[३]। लोके यथा एको हि दीपः स्वेन सह सम्पूर्णेऽपि वेश्मनि प्रकाशं करोति। तथैवेहापि परिभाषासूत्रं स्वार्थसंवलितेन सह विधिसूत्रे सोपकारकं सेत्स्यते। एकशतं षष्ठ्यर्था अतः क्वाचित्का षष्ठी स्थानार्थिका कुत्रचिच्च अवयवार्थिका इति निर्धारणाय प्रकृतसूत्रे लिंगसमायोजनपक्षे ''शास इदङ्हलोः'' इत्यत्रापि लिंगासज्जनं कार्यमिति' आशङ्क्य यथोक्तन्यायेन तस्य समाहारः कृतः भाष्यकृता यत्र अवयवषष्ठी तदुत्तरं तदनुवृत्तं स्थाने योगार्थं भविष्यति। इको यणचीत्यादौ न च उदुपधायाः गोहः न वा शादइदंगहलः तत्र तु अवयवषष्ठी प्राकृतमेव। सर्वत्रापि परिभाषासूत्राणां एतावत्प्रवृत्तिरेव ज्ञायते।

९. **भुक्तभोजननिषेधन्यायः** – अयं न्यायो भाष्यकारेण स्थानेऽन्तरतमः[४] इति सूत्र भाष्यव्याख्यावसरे व्याख्यातः। यथोच्यते ह्येतेन ''निवृत्तप्रतिपत्तौ निवृतिर्न स्यात् अर्थात् क्रियायां निर्वृत्तायां पुनस्तस्याः निषेधो व्यर्थः। सूत्राणां प्रवृत्तिपक्षे सर्वे सर्वत्र प्रवर्तन्ते इति धिया इष्टनिवृत्तिर्न स्यात् अनर्थकं भविष्यति

---

१. वैय्याकरणसिद्धान्तकौमुदीस्थकारकप्रकरणे।
२. पातञ्जलमहाभाष्ये इग्यणः सम्प्रसारणम् सूत्रव्याख्यानप्रसंगे।
३. षष्ठीस्थाने योगा सूत्रे भाष्ये दीपकेति शब्देन व्यवहृतः।
४. स्थानेऽन्तरतमः सूत्रभाष्ये भुक्तवन्तं ब्रूयात् मा भुङ्क्थाः।

यथा लोके भुक्तवन्तः ब्रूयात् मा भुङ्था इत्यनेन किं तस्य।

१०. **पर्जन्यवल्लक्षणन्यायः** - लक्षणप्रवृत्तिः पर्जन्यवत्-मेघवत् भवति। मेघो यथा जलेऽपि वर्षति स्थलेऽपि वनेऽपि सर्वत्रापि वर्षते तथैव शास्त्राणामपि फलाऽभावेऽपि प्रवृत्तिः यथा चिचीषति (सन्नतात्) तुष्टूषति इत्यादौ च ''अज्झनगमां सनि'' इत्यतो दीर्घम्। न चात्र दीर्घसत्वेऽपि पुनर्दीर्घविधानं निरर्थकमितिवाच्यम्। सार्वधातुकार्धधातुकयोरिति शास्त्रस्य प्राप्तस्य गुणस्य पुर्नदीर्धसामर्थ्यात् गुणाभावः। अतएव भाष्यकारेणोक्तम् ''दीर्घाणामपि दीर्घवचनकरणात् एतत्प्रयोजनं गुणो मा भूत्। एतदेव बोध्यते यत् शस्त्राणां प्रवृत्तिप्रर्जन्यवत् भवति सन्दर्भशास्त्रे।'' कृतकारि खल्वपि शास्त्रं पर्जन्यवत्। तद्यथा-पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति। तथैवदीर्घत्ववचनसामर्थ्यात् गृणों न भवतीति भाष्यकारेणोक्तत्वात्।

**११. स्थालीपुलाकन्यायः** - बहुत्रोपयुज्यतेऽयं न्यायः। यथा लोके दृश्यते एकस्यां स्थाल्यां पचमानस्योदनस्य एककणमानीय परीक्षणं करोति पाचकः। एकेनापि समेषां पक्वतां निश्चिनोति। सस्तथैव शास्त्रेऽपि एकेनापि-अवयवेन समुदायनिश्चयं करोति यत्र तत्रायं न्यायः प्रयुज्यते। कारके (१-४-२३)[१] सूत्रेऽत्रभाष्ये प्रतिपादनावसरे वक्ति भाष्यकारः यदत्र करोतीति करकमित्यन्वर्थसंज्ञाकरणात् करणाधिकरणयोः कारकयोः कारकत्वमाशङ्क्य, प्रधानक्रियायां परतन्त्रत्वेऽपि स्वकीयायां क्रियायां स्वतन्त्रसत्वेऽपि कारकत्वं निर्दिष्टं-यथा-स्वतन्त्रपरतन्त्रत्वात्-सर्वत्रैवात्र स्वातन्त्र्यं पारतन्त्र्यं च विवक्षितम्। पुनश्च तत्र सम्प्रदानापादनयोरपि क्रियास्वातन्त्र्यपारतन्त्र्योर्विवक्षित्वात् अपादानस्यापि स्वातन्त्र्यविवक्षायां कारकसंज्ञा पारतन्त्र्यञ्च अपादानत्वं सिद्धयति। इति रीत्या यथा करणत्वादीनां कारकत्वं तथैव अपादानादीनामपि स्थालीपुलाकन्यायेन। यथोक्ति र्हि भाष्ये-पर्याप्तं करणाधिकरणयोः कर्तृत्वं निदर्शितमपादानादीनां कर्तृत्वनिदर्शनाय, पर्याप्तो ह्येकः पुलाकः स्थाल्या निदर्शनायेति पतञ्जलिना भाष्ये प्रोक्तम्। यथोतरं मुनीनां प्रामाण्यमिति रीत्या अत्रत एव व्यवहार आरभ्यते शास्त्रान्तरेष्वपि।

**भिक्षुक भिक्षान्यायः**-लोके यथावलोक्यते यत् भिक्षुकः सर्वा अपि भिक्षावृत्ती स्वीकरोति। न च तेन द्वितीयायां प्राप्तौ पूर्वायाः भिक्षायाः त्यागः क्रियते। न्यायोऽयं समर्थः पदविधिः (२-१-१)[२] सूत्रभाष्यप्रसङ्गे महर्षिपतञ्जलिना व्यवहृतः। तत्र हि भाष्ये समर्थपदेन अजहत्स्वार्था-जहत्स्वार्थेतिवृत्तिद्वयमुपात्तं पुनश्च तत्र निगदितं एकनेव विरूद्धधर्मयोः प्रतिपादनं कथं-''युक्तं पुनरिदं जहत्स्वार्थानाम् वृत्तिः स्यात् वाढं युक्तम्। पदविधौ अजहदवृत्तिपक्षे एकार्थीभावं बोधयन्ति पदानि। परञ्च तत्र एकार्थीभावः स्वार्थत्यागं विनैव परिकल्प्यते। यथा कश्चन भिक्षुकः द्वितीयां भिक्षां प्राप्योऽपि पूर्वान्न व्यजत्यपितु सञ्चिनोत्येव। इति न्यायसमन्वयः।

**बृद्धकुमारीवरन्यायः**- वृद्धा काचित् कुमारी तपसेन्द्रं संतुष्येन्द्रस्तां वरं वृणीष्वेत्युक्ते तयोक्तम्-पुत्रा मे बहुक्षीरघृतमोदनं कास्यापात्र्यां भुञ्जीरन्। भाष्यप्रयोगबलेन लोककल्याणसाधिका काचित् वृद्धा

१. पातञ्जलमहाभाष्ये कारके (१-४-२३) भाष्यप्रसंगे।

२. तत्रैव समर्थपदविधिः (२-१-१)भाष्यप्रसंगे।

वसुधैवकुटुम्बकमितिभावनया लोकहितायैव समेषां पुत्रपौत्रादीनां हितकाम्यैव वरं प्रार्थितवतीत्यनया सिद्धान्तविसंगतिर्नाकल्पनीया अन्यथा तस्या: कुमार्या: सन्तानहीनत्वात्कथमेतत्सिद्धयति। एतेन भाष्कृतो लोकव्यवहारमूलिका प्रवृत्तिरिह ध्वन्यते। लोकप्राबल्यमूलकञ्च शास्त्रमित्यपि ज्ञायते।

**प्रकृतेऽयंभाव**:-यथा वृद्धा कुमारी एकेनैव वरेण सर्वं भौतिकं सुखं याचितवती। तथैव शास्त्रेऽपि एकेनैव सूत्रेण अनेकानि कार्याणि सहैव क्रियन्ते। यथा अमुनेतिपदप्रयोगसिद्धिदशायां आङोनाऽस्त्रियाम् इत्यनेन नाविधानदृष्ट्योत्वमत्वासिद्धिवारणाय नमुने'' (क्र.२.३)[१] इति निषेध-शास्त्रेण नाभावे कर्तव्ये कृते च मुभावो नासिद्धं एतेन तद्दोषोऽपवारित:। पुनश्च शंकाया: कृते नमुने इत्यत्र परार्थिकां सप्तमीमाश्रित्य ने परत: कथं मुत्वस्य सिद्धिरुच्यते। अत: नमुने इत्यत्र ने परतोऽप्यसिद्धत्वप्रतिषेधे आचार्याभिप्रायो लक्ष्यते। अतएव भट्टोजिदीक्षितेन सूत्रवृत्तौ नाभावे कर्तव्ये कृते च मुभावो नासिद्ध: स्यादित्युक्तम्। बृद्धकुमारी यथा एकेनैव वाक्येन सर्वं संसाधितं तथैवात्र नमुने एकेनैव शास्त्रेण नाभावे कर्तव्ये कृते च मुभावे नासिद्ध: इत्यादिकं सर्वं संसाध्यते। इति न्यायसमन्वय:।

**खले कपोतन्याय**:-महर्षिपतञ्जलेरिमां प्रवृत्तीमंगीकृत्योत्तरवर्ती नागोजिभट्टोऽपि वैयाकरण-सिद्धान्तलघुमञ्जूषायां न्यायमिमं प्रवर्तते-खले कपोत:-तत्रैतेन तात्पर्यनिरूप्रकरणे उच्यते-शब्दबोधे पूर्वपूर्वोच्चारितपदार्थानां शीघ्रविनाशयुक्तत्वात्। समूहालम्बनात्मिकैव कारणता वाक्यार्थबोधे स्वीकार्या न तु पृथग्ररूपेण। शाब्दबोधसंगतिरियं खले कपोतन्यायनेति लोकव्याप्त्या दृढीक्रियते। यथा लोके वृद्धयुवशिशुसंयुक्ता: कपोता: सहैव खले अवतरन्ति सहैव वा उड्डीयन्ते। तथैव शाब्दबोधस्थलेऽपि क्रियाकारकविशेषणविशेषपदानां समूहालम्बनात्मिकयोपस्थितयैव अन्वयबोध:-''तथाहि मञ्जूषायाम्[२] अत्र श्रौतं तावत् पदार्थज्ञानानां आकाङ्क्षादिज्ञानानाञ्च नष्टत्वेऽपि तेषां समूहालम्बनस्मरणात् तत्संस्काराद् वा अन्वयबोध:। एवमन्येऽपि न्याया:, सूचीकटाहन्याय:, लाघवप्रवृतिमूलक:, गोवलीवर्द्रन्याया:, राजपुरप्रवेशन्यायश्च सन्तीति ज्ञायते।

**उपसंहार**- न्यायो नाम लोकप्रचलिताभाणकीयवस्तुन: शास्त्रे दार्ष्टान्तिको व्यवहार: लोकशास्त्रयोरैक्यमूलेयं प्रवृत्ति: शास्त्रस्यं लोकव्याप्तिं बोधयति। वेदांगीभूतप्रधाने व्याकरणे समायाता अमी न्याया:। प्राच्यनव्यरीत्या तद्व्यवहारकर्तृकशास्त्रेण चेदं कथयितुं शक्यते कतिपया:, न्याया: यथा जलतुम्बिका, चम्पकपुष्पिकादिन्याया: सारस्वतपरम्पराया: अध्ययनपरम्परातो वा बुध्यन्ते। नागोजिभट्टप्रयुक्ता: कतिपया: न्याया: वैयाकरणभूषणे मञ्जूषायां वा प्राप्यन्ते। भर्तृहरिवाक्यपदीयेऽपि न्यायानां बहूनां पारम्परिकानां व्यवहार:। यथा अव्यक्तव्यक्तन्याय:-

---

१. तत्रैव ८.२.३

२. वैयाकरणसिद्धान्तलघुमञ्जूषायाम्-तात्पर्यविवेचनप्रसङ्गे।

**अम्बाम्बेति यथा बालः शिक्षमाणः प्रभाषते।**
**अव्यक्तं तद्विदां तेन व्यक्ते भवति निश्चयः।।**[१]

दध्युपघातकन्यायः- यथा

**काकेभ्यो रक्ष्यतां सर्पिरिति वालोऽपि चोदितः।ऋ**
**उपघातपरे वाक्ये न श्वादिभ्यो न रक्षति।।**[२]

संज्ञा संज्ञिनं प्रत्याय्य स्वयं निवर्तते-इत्यस्य न्यायस्य यथा-

**यो य उच्चार्यते शब्दो नियतं न स कार्यभाक्।**
**अन्यप्रत्यापने शक्तिर्न तस्य प्रतिबध्यते।।**[३]

ये चाभिव्यक्तपदार्था लोकविश्रुताः स्वतन्त्राश्च तत्रैव शास्त्रप्रवृत्तिः

**यथोच्यते-अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः।**
**शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु।।**[४]

अत्र शास्त्रैकचक्षुष्काः विपश्चितः स्वमतपरिपुष्टौ लोकदृष्टान्तमुररीकृत्य स्वमतं दृढं प्रस्तुवन्ति। लोकशास्त्रसमन्वितिरियं शास्त्रकारस्य अपूर्वज्ञानविज्ञानसमन्वयं विलसति। एतैव शास्त्रस्य शासनकरणता सर्वतोभावेन सुसंस्कारितशैल्या ज्ञानविज्ञानसरण्या च लौकिकत्वं स्वीकार्य आध्यत्मिकं वा संयोज्य मोक्षोपयोगिमार्गत्वं संसूचयति। संक्षेपेण लोकः अर्थम् शब्दस्तु शास्त्रम् एतदेव न्यायानामुपयोगित्वं दर्शयत्ययं प्रयोग इति दिक्।

---

१. वाक्यपदीयम् ब्रह्मकाण्डे-कारिकसंख्या १५२।
२. तत्रैव
३. तत्रैव कारिकासंख्या-६१, पण्डितश्रीसूर्यनारायणशुक्लकृतभावप्रदीपव्याख्यायाम् पृ. ७३।
४. परिभाषेन्दुशेखरे डॉ. श्यामचरणत्रिपाठीकृते हिन्दी- अनुवादे।

# नारीणां श्रौतस्वरूपविमर्शः

**कमलेश शक्टा**

सृष्टेः संरचनायां नारी अपूर्वा कृतिः वर्तते, आपुराकालादेव वर्तमानपर्यन्त बहुविधपरिवर्तनानि सञ्जातानि, तेष्वन्यतमानि कारणानि कानि इति प्रश्ने कृते सति मूलान्वेषणे दृष्टिपात उत्पद्यते। समाजे परिवारः प्रथमः सोपानः यत्र जीवाः पल्लविताः पुष्पिताः च भवन्ति। मातु संप्रेरणया पोषिता इमे जीवाः विश्वस्मिन् विश्वे उत्कृष्टतां भजन्ति।

भारतीयसंस्कृतौ वेदानां स्थानं सर्वोपरि विद्यते। श्रुतेः आधारशिलायां भारतीयतायाः महत्प्रासादः विराजते। वेदेषु वर्णिताः अक्षरराशिः ब्रह्मवाक्यरूपेण अभिमण्डिताऽस्ति। वेदविषये वर्णितमिदम्–

**अनादिनिधनानित्या वागुत्सृष्टा स्वयम्भुवा।**
**नित्य वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः।।**

**सर्ग सर्गऽमुनैवैते उद्गीर्यन्ते तथैव च।**

**शतपथब्राह्मणे वर्णितम्–**

धनधान्यसम्पन्नपृथिव्याः दानाय यादृशस्य फलस्य प्राप्तिर्भवति ततोऽप्यधिकफलप्राप्तिस्तु वेदाध्ययनेन प्राप्यते, तथा चाक्षयलोकस्याऽपि पुण्यं मानवः अर्जयति[१]।

**'मन्त्र ब्राह्मणयोर्वेदनाम धेयम्',** इत्यनेन मन्त्रब्राह्मणयोर्स्वरूपज्ञानमावश्यकम्।

येन विधिना याज्ञिकक्रिया सम्पन्ना भवति एवं यत्र देवस्तुतिविषयककृत्यानां विधानं विद्यते तन्नाम 'मन्त्र' इत्यभिधीयते। मन्त्रं 'ऋचा' शब्देनापि व्यवह्रियते।

बृह् धातुना सम्पन्नः ब्रह्मन्शब्दः अनेकार्थवाची विद्यते। ब्राह्मणशब्दः ब्रह्मणः व्याख्येयग्रन्थानामुद्बोधकः, शतपथब्राह्मणानुसारेण वैदिकमन्त्राणां व्याख्यानेन 'ब्राह्मण' इति नामधेय अभूत, अयं ब्रह्मन् शब्दः याज्ञिककृत्येष्वपि बहुधा प्रयुक्तः अस्तिः।

---

१. शतपथ ब्राह्मण – ११.५.६१

ब्राह्मणग्रन्थानां वैशिष्ट्यं प्रतिपादयता तैत्तिरीयसंहितायामुल्लिखितम्– ब्राह्मणग्रन्थास्तु विश्वकोषसदृशाः यत्र यागानां वैज्ञानिकी, आधिभौतिकी, आध्यात्मिकी मीमांसा च कृताऽस्ति[१]। ब्राह्मणग्रन्थानां विस्तृतं साहित्यमासीत्। विद्वद्गणनानुसारेण ११३० ब्राह्मणग्रन्थेषु साम्प्रतं १८ ग्रन्था एव उपलब्धाः सन्ति[२]।

वेदेषु ऋग्वेदः आद्यः, अत एव वैदिककालिकनारीणां प्राचीनतमस्वरूपमत्रैव प्राप्यते, अस्मिन् काले बालिकानां उपनयनादिसंस्काराः बालकानामिव क्रियन्ते स्म। सन्ध्यावन्दने यः विधिः प्रयुक्तः, स एव विधिः कन्याभिरपि आचरितः आसीत्। तादृशाः बहवः साक्ष्याः उपलभ्यन्ते यैः ज्ञायते यत् तदानीं बालविवाहः निषिद्धः आसीत्। ऋग्वेदे नैकानि सूक्तानि महिलाभिः आविष्कृतानि सन्ति। ब्रह्मवादिनी घोषा दशममण्डलस्य ३९-४० सूक्तानां साक्षात्कारं कृतवती[३]। इन्द्राणी ऋग्वेदस्य दशममण्डलस्य सूक्तं रचयामास।

वेदे वर्णितेषु रात्रि, उषा, सूर्या, पृथ्वी, उर्वशी प्रभृतिदेवीषु प्रायशः सर्वाः प्राकृतिक-शक्तेः प्रतीकभूताः सन्ति[४]। नारीभावनायाः सम्पूर्णः परिचयः ऋग्वेदे वर्णितः एभिः प्रतीकैः ज्ञायते। आर्यैः सर्जिताः एतासु देवीसु अदिति स्वाधीनतायाः प्रतिमा वर्तते। अदिति अनादि जननी अस्ति, या मुनष्यान् बंधनात् मुञ्चति[५]। इन्द्राणी स्वकीयेन त्यागेन बलिदानेन च इन्द्रं पुष्ट्यत्यादर्शपत्नीवृतञ्च समाचरति[६]। सूर्या आदर्शार्यवधूरूपेणाद्यापि समादृताऽस्ति[७]। ज्ञानस्य अधिष्ठात्री देवी सरस्वती, या वीणां धारयन्ती सुरकलां प्रवहति[८]। तत्रैव सौन्दर्यस्य अनुपमा देवी 'उषा' स्वकीयकान्तिकिरणैः आप्तजनान्नपि सहजभावेनाकर्षयति[९]।

ऋग्वैदिककाले नार्यः विविधाः स्वरूपा आसन्, तासामुल्लेखः इत्थं वर्तते–

**कन्या–** प्राप्तैः प्रमाणैः ज्ञायते यत् कन्यायाः प्राप्तिः परिवारस्य कृते उल्लासस्य कारणमासीत्। प्रस्तुते उदाहरणे उभयोर्सम्बन्धविषयकं चित्रणं वर्तते–

**"संगच्छमाने युवती समन्ते स्वसाराजामी पित्रोरूपस्थ[१०]"।**

१. तै० सं० - १.५.१
२. वैदिक साहित्य - रामगोविन्द त्रिवेदी
३. ऋ दश म० - ३९-४०
४. ऋ ४.२.१५, ५.४५.२
५. ऋ १.७२.९, ६.६७.४, ८.२५.३
६. ऋ १०.१४५
७. ऋ १०.८५
८. ऋ २.४१.१६
९. ऋ १.११९.१९, ४.२.१५
१०. ऋ १.१८५.५

आर्याः कन्यायाः प्राप्तये पूषादेवतायाः समाराधनं कुर्वन्ति स्म। कन्यासमादरं देवीतुल्यं मत्वोत्कृष्टविधिना तस्याः लालनं पालनमर्चनञ्च कर्त्तव्यमासीत्। गृहकार्ये दक्षतासम्पादनेन सह शिक्षायाः सम्यकार्जनं प्रधानकार्यमासीत्। इत्थं ब्रह्मचर्यानन्तरं पाणिग्रहणसंस्कारस्योपक्रमः प्राप्यते–

**"ब्रह्महनाचार्येण कन्या युवानं विन्दते पतिम्[१]"।**

लोपमुद्रा, विश्ववारा, सिकता, निवावरी, गोपायनाप्रभृतयः नार्य्यः बाल्यकालादेव विधिवत् वेदमधीत्य कालान्तरे ऋषित्वेन विभूषिताः।

विविधासु कलासु निपुणा इमा कन्याः गायने वादने नृत्यकलायां च दक्षाः आसन्। कौषितकि ब्राह्मणे अस्य विशिष्टोपपादनं वर्णितमस्ति[२]। एवमेव तैत्तरीयसंहितायां, मैत्रायणीसंहितायां च कन्यायाः संगीतविषयिणी अभिरुचिः विस्तरेण प्रकाशिताऽस्ति।

**पत्नी** - ब्राह्मणग्रन्थेषु उपलक्षितः यत् विवाहस्य प्रथमोद्देश्यं याज्ञिककृत्यानां सम्पादनमिति। अत एव याज्ञिकविधानानि पत्नीं विना पूर्णतां न यान्ति। सर्वविधप्रकारेषु याज्ञिककार्येषु भार्योपस्थितिः अनिवार्या वर्तते–

**"अयज्ञो वा एष योऽपत्नीकः[३]"।**

महर्षिपाणिनिः अष्टाध्याय्यां विलिखति–

**"पत्युर्नो यज्ञ संयोगे[४]"**

शतपथब्राह्मणानुसारेण पत्नीविहीनः पुरुषः पूर्णत्वं न प्राप्नोति - **"सह मिथुनेनाथ सर्वोऽथ कृत्सनः[५]"**। ऐतरेयब्राह्मणे वर्णितम्–

**"पुरुषो जायां वित्वा कृत्स्नतरमिव आत्मानं मन्यते[६]"।**

शतपथब्राह्मणे, तैत्तरीयब्राह्मणे[७], जैमिनीयब्राह्मणे[८], च पत्नी पत्युः आत्मायाः अर्द्धभागरूपेण स्वीकृता अस्ति। **"अर्धो ह वा एष आत्मनो यज्जाया[९]"**।

१. अथर्व ११.५.१८
२. कौ० ब्रा० - २.९
३. तै० ब्रा० - २.२.२.६
४. पा० अ० - ४.१.३३
५. श० ब्रा० - ८.७.२.३
६. ऐ० ब्रा० - १.२.५
७. तै० ब्रा० - ३.३.३.५ अर्धो ह वा एष आत्मनः यत्पत्नी
८. जै० ब्रा० - १.८६
९. श० ब्रा० - ५.२.१.१०

तैत्तरीयसंहितायामपि अस्यैव भावस्य परिपुष्टि विद्यते–

**“गृहा वै पत्न्यै प्रतिष्ठा[१]”।**

शतपथब्राह्मणे प्रतिष्ठामाधारीकृत्य पत्नीगृहयोर्मध्ये सम्बन्धः स्थापितः अस्ति, यतो हि ऋग्वेदे ‘जायेदस्तम्[२]’ अर्थात् पत्नी एव गृहमित्युक्त्वोभयोर्तादात्म्यं स्थापितः। तैत्तरीयब्राह्मणे दम्पतिमुद्दिश्य वर्णितम्–

**“सं पत्नी पत्या सुकृतेन गच्छताम्। यज्ञस्य युक्ती धुर्यावभूताम्। संजानानौ विजहतामरातीः। दिवि ज्योतिरजरमारभेताम्[३]”।**

शतपथब्राह्मणे वाजपेययज्ञावसरे पत्निमुद्दिश्य पतिः कथयति–

**“जाय एहि स्वो रोहावेति रोहावेत्याह जाया तद्यज्जायामामन्त्रयते[४]”।**

ताण्ड्यमहाब्राह्मणानुसारेण–

**“तं पत्न्योऽपद्याटिलाभिरूपगायन्त्यार्त्विज्यमेव तत्पत्न्यः कुर्वन्ति सह स्वर्गलोकमयामेति[५]”।**

सायणाचर्येण अप्रतिवादिनीति शब्दस्य व्याख्यावसरे प्रोक्तम्– **“पत्युः इच्छानुकूलं वदन्तीति[६]”** अथर्ववेदानुसारं पत्युपथगामिनी स्त्री पतिप्रियाभूत्वा ऐश्वर्यसम्पना भवति। ‘सुपत्नीति’ अन्यतमो विशेषणः तैत्तरीयब्राह्मणे प्राप्यते। कोषकारः सूर्यकान्तः आंग्लविद्वान् विल्सनः शब्दस्यास्य व्याख्यावसरे भजतः - **शोभनपतिका[७]** वा A Woman having a good husband[8].

**माता** - नार्यः चरमोत्कर्षः मातृत्वे प्राप्यते। इयमेव नारीजीवनस्यावस्था विद्यते यत्र तस्याः शक्तेः महत्तायाश्च प्रस्फुटनं भवति। ऋग्वेदानुसारेण माता सर्वाधिका घनिष्ठा प्रियसम्बन्धिनी च वर्तते। वेदः मातरं गुरुरूपेण स्वीकरोति। अथर्ववेदे आदिष्ट अस्ति - **मातृ-अनुकूलो भव[९]।** वैदिकसाहित्ये

१. श० ब्रा० - ३३.१.१०
२. ऋ० - ३.५३.४
३. तै० ब्रा० - ५.२.१.१०
४. श० ब्रा० - ५.२.१.१०
५. ता० महा० ब्रा० - ५.६.८
६. पत्युः प्रतिकूलं वदतीति ‘प्रतिवादिनी’ तद्विपर्ययेणानुकूलवादिनी भवति- सा. भा.
७. ए० प्रे० वै० हि० डि० सूर्य० पृ० ७०७
८. सं० इ० डि० वि० पृ० ७९३
९. अथर्व - ३.३०.२

पत्नये **'जाया'** शब्दः स्त्रियः मातृपदस्यैव द्योतकः, पुत्रवतीनारीणां विशिष्टादर आसीत्। अत एव मनुनाऽप्युक्तम्– **व्रजनार्थं स्त्रियः सृष्टाः**[१]**।**

मातृवाचकशब्दाः – यथा माता, जनि, प्रभू, तू, अम्बा, अम्बि, अम्बीत्यादि वेदे परिगणिताः सन्ति। ऋग्वेदे **'मातृ'** शब्दस्य प्रयोगः प्राधान्येन दृश्यते, विशेषतः याज्ञिकप्रक्रियायां 'मातृ' शब्दः प्रयुक्तः[२]।

अथर्ववेदे वर्णितमिदम्–

**पुमांसं पुत्रं जनय तं पुमाननु जायताम्।**
**भवासि पुत्राणां माता जातानां जनयाश्च यान्।।**

**भगिनी** – ऋग्वैदिकमन्त्रेषु भ्राताया अनन्तरं भगिनीशब्दः प्राप्यते। तत्रैतादृशान्यालंकारिकवर्णनानि सन्ति यत्र उषा, अप इत्यादिषु भातृभगिनीसम्बन्धानां दृष्टान्तं प्रस्तुत्य तयोर्घनिष्ठतायाः सद्भावनायाः, सहयोगश्च वर्णनं प्राप्यते। इत्थं विविधैः स्वरूपैः मण्डिता स्त्री सर्वत्र वन्दनीया आसीत्।

श्वस्रू, ननान्दृ, पुत्रवधू, सपत्नी, परित्यक्तेत्यादिरूपाष्वपि नारी सम्मुखे आयाति, प्राचीनकालादेव प्रचलितेयं परम्पराद्याप्यत्र विराजते, विभिन्नानां बाह्यसंस्कृतीनां प्रादुर्भावेऽपि इयं भारतीया संस्कृतिः स्थैर्यं धारयति तर्हि तस्याः मूले इयमेव नारीशक्तिः विद्यते।

१. मनु० २.९६

२. ऋ० – १.२४.२१, १.२४.२, ७.५५.५, १.१४.७

# कालिदासीयनाटकेषु नारीजीवनम्

**डॉ. ( श्रीमती ) धात्री सिंह**

कविकुलगुरोः कालिदासस्य नाटकेषु नारीचित्रणं विलोक्य इदं वक्तुं शक्यते यत् तत्कालीन-समाजे महिलानां सम्मानपूर्णस्थानमासीत्। पत्नी खलु अर्धांगिनीनाम्नाभिधीयते स्म। तदा नारी केवलं भोगविलासैकप्रयोजना न मन्यते स्म। नार्यः गृहकार्येषु दक्षाः सत्स्वपि वाह्यकर्मस्वपि पत्युः सहयोगं कुर्वन्ति स्म। बाह्यसमस्यानां निराकरणेऽपि नारीणां श्लाघनीयं योगदानमासीत्। महाकविकालिदासस्य नाटकानां नामकरणदेव पूर्णतया स्पष्टं जायते यत् नार्यः नाटकेषु विशेषेण सम्मानिता आसन्। न केवलमितरपात्राणि अपितु राजा स्वयमपि अग्रमहिषीं देवीशब्देन सम्बोधयति स्म। देवी-शब्दः सुतरामादरसूचकोऽस्ति। पतिः पत्न्या मोदाय सदा कामयते स्म–

**''त्वं मे प्रसाद सुमुखी! भव देवी नित्यमेतावदेव हृदये प्रतिपालनीयम्।''**[1]

समाजे नार्यः किल सादरं सम्बोध्यन्ते स्म। एतेनैव राज्ञीमिरावतीं भगवतीशब्देन सम्बोधयति– ''भगवति अभिवादये।'' (मालविका. १.२७३)

यथा पुरुषा नारीष्वधिकारं घोषयन्ति स्म तथ नार्योऽपि पुरुषेषु प्रवलमधिकारम् घोषयन्त्यो दृश्यन्ते–

**कुपिता न तु कोपकारणं सकृदप्यात्मगतं स्मराम्यहम्।**
**प्रभुता रमणेषु योषितां न हि भावस्खलितान्यपेक्षते।।**[2]

पत्नीं प्रसादयितुं न खलु एतावदेव, अपितु भूयोऽप्युक्तम्– प्रिये! यदि साम्प्रतं मां विहाय गम्यते तर्हि नाहं प्रसादितोऽस्मि–

**''प्रिये! न खलु प्रसादितोऽस्मि यदि संप्रति विहाय गम्यते।''**[3]

---

१. मालविकाग्निमित्रम् ५.३५८

२. विक्रमो० ४.२६

३. विक्रमो० ३.२०६

यथा महाराज्ञी– इरावती रूष्टा सती नृपं पुरूषं वचांसि श्रावयति तदा राजाऽपि तां प्रसादयितुं सर्वथा प्रयतते–

**''प्रसीदतु भगवती। सुन्दरी न शोभते प्राणयजिने निरपेक्षत।''**[१]

एवं स्पष्टं ज्ञायते यत् तस्मिन् काले महिलानां स्थितिः अत्यादरणीया आसीत् परं कालिदासस्य नाटकेषु नारीणां तुच्छरूपमपि दृश्यते। दुष्यन्तः शकुन्तलायाः अपमानं कृत्वा तस्या हृदयं भृशं व्यथयामास। तस्य वचनस्य प्रभावः शकुन्तलाया हृदि कियदधिकः स्यादिति–दुष्यन्तोच्चारित–वाक्यैरनुभवितुं शक्यते–स्वार्थपराणां स्त्रीणामेतादृशैः स्निग्धछद्मवचनैः कामिजना एव मुह्यन्ते। ''एवमादिभिरात्म-कार्यनिर्वर्तिनीनामनृतमयवाङ्मधुभिराकृष्यन्ते विषयिणः।''[२] यदा गौतमी नृपं बोधयितुं यतते–यत् तपोवने पालिताकन्या छलस्य नामपि न जानाति। एवमुक्ते राजा दुष्यन्तः न केवलं शकुन्तलामेव निरादृतवान् अपितु गौतमीमपि कटुवाक्यैः भर्सयन् आह–तापसवृद्धे–

**स्त्रीणामशिक्षितपटुत्वममानुषीषु संदृश्यते किमुतयाः प्रतिबोधवत्यः।**
**प्रागन्तरिक्षगमनात् स्वमपत्यजातमन्यैर्द्विजैः परभृताः खलु पोषयन्ति।।**[३]

**वाल्यजीवनम्–**

कालिदासस्य नाटकेषु वालिकानां यद् वर्णनमस्ति तद् वर्णनं अतीवस्वाभाविकं वालिकानां च विकासार्थ पूर्णरूपेण सक्षमो दृश्यते। वालिकानां शिक्षणं क्रीडनं सर्वमपि मनोवैज्ञानिकरूपेण तस्मिन् काले भवति स्म। सर्वा वालिका मिलित्वा स्नेहेन सर्वमपि कार्यं सम्पादयन्ति स्सम। अध्ययनकाले शिक्षणेतरकार्येषु अपि ताः दक्षाः भवन्ति स्म। यदा कण्वः तीर्थयात्रार्थं वहिर्गतः तदा अतिथि सत्काराणां कार्यभारः शकुन्तलाया एव करोति स्म। यदा दुर्वासा आश्रमे आगच्छति तदा स्वयमपि असत्कृतो भूत्वा शकुन्तलामेव सशाप। अनेन प्रतीयते–तदा बालिका सर्वकार्येषु दक्षाः भवन्ति स्म। बालिकानां वाल्यावस्थायाः चापल्यस्य स्वाभाविकं चित्रणं कालिदासीय नाटकेषु हृदयावर्जक वर्तते।

''तत्र खलु मन्दाकिन्या पुलिनेषु गता सिक्तापर्वतकेलिभिः क्रीडन्ती विद्याधरदारिका उदयवतीनाम् ............।[४]

न एतावदेव अपि तु वाल्ये किञ्चित् कन्दुकक्रीडनस्य वर्णनं वाल्यावस्थायां च वानरस्य अंगुष्ठं दर्शयित्वा खेदनतायाः सहज मधुरभावोऽपि दृश्यते।

१. मालवि० ३.८८
२. अभि० शा० ५.२५९
३. अभि० शा० ५.२२
४. विक्रमो० ४.

**"देव! कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिंगलवानरेण।"**

बालकाय-बालिकायै पित्रौ हृदयेऽनुपमः स्थिरश्च स्नेहो भवति। इदमपि तथ्यं पूर्णतया स्पष्टं भवति यत् पुत्रौ एव पितुः कोमलभावनां पल्लवितां करोति– यतो हि सा एव पितुः आवासे आनन्दमयं वातावरणं सम्पादयति। यौवनरूढां तां पिता परस्य गेहलक्ष्मीं मन्वानः तस्या विवाहसंस्कारं सम्पन्नं करोति। कियत् हृदयस्पर्शि भवति तद् दृश्यं यदा पितरौ बहुवर्षे पल्लविता पुष्पिता शाखामिव तां विलपतीं परगेह सम्पदं मन्वानः प्रयच्छत्। शकुन्तलायाः प्रस्थानसमये वनौकसः कण्वऋर्षेरपि मनः नितरां व्यथितः बभूव–

**यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया,**
**कण्ठः स्तम्भितवाष्पवृत्तिं कलुषश्चिन्ताजडं दर्शनम्।**
**वैक्लव्यं मम तावदीदृश्मपि स्नेहादरण्यौकसः,**
**पीड्यन्ते गृहृणिः कथं न तनयाविश्लेषदुःखैर्नवैः।।**[१]

एव कविकुलग्रुरुः कालिदासः स्वप्रभावशालिन्या लेखन्या पितुः स्नेहिलसम्बन्धं, कन्यां प्रति पितुर्ममत्वामाकर्षणं, उच्चभावनाच सुतरामद्भुद्रूपेण चित्रितवान्।

**गृहस्थजीवनम्–**

वैवाहिकजीवनस्यैव नामान्तरमिदं दाम्पत्यजीवनमिति। भारतीयसंस्कृतिसभ्यातानुसारं पुरातनकालादेव नार्याः स्वभर्तारं देवतामिव पूजयन्ति स्म। कदाचिच्च अतोऽपि भूयः स्वभर्तरि-ईश्वरतुल्या, सम्मानना अत्रत्यानां नारीणामादर्शो बभूव। स्त्रियः पतिव्रता भवन्ति स्म। मानवीयस्वभाववशात् स्त्रियः स्वभर्तारं मन्यांस्यां स्त्रियां रतिं वध्नानं दृष्ट्वा न केवलं तस्मात् ईर्ष्यन्ति स्म, अपितु कदाचित् विरोधोद्घोषमपि कुर्वन्ति स्म।

**"नास्ति खलु भवतोऽपराधः। अहमेवात्रपराद्धा या प्रतिकूलदर्शन भूत्वाग्रतस्ते तिष्ठामि।"**[२]

महिषी इरावती खल्वमर्षवशमापन्ना राजानमेव कथितवती– "विश्वसनीयोऽसि। न मया विज्ञात ईदृशविनोदवृतान्त आर्यपुत्रेणेपलब्ध इति। अन्यथा दुखभागिन्येवं न क्रियते।"[३]

तत्कालीनां नारी एतादृशीं स्थितिं दृष्ट्वा पुरुषेषु अविश्वस्ता आसीत्। पूर्वमनुरागं विधाय पश्चाच्च स्वकृते कर्मणि पश्चात्तापमपि करोति स्म। अयमनुशयश्च व्याधस्य वाद्यं सर्वथात्मानं

---

१. अभि० शा० ४.६
२. विक्रमो० २.१८९
३. मालवि० ३.३१९

विस्मृत्य जलवद्धा हरिणीवदासीत्। एतादृशं एवं इरावत्या विचारोऽस्ति यत्सा तस्य छद्मस्निग्धेषु वचनपाशेषु निगडिता इति।

**''अविश्वसनीयाः पुरुषा। आत्मनोवचना वचनं प्रमाणीकृत्याक्षिप्तयाब्यधि जनगीतगृहीतचितैयव हरण्यैतन्न विज्ञातं मया।।**[१]

राजा पुरूरवा उर्वश्या सहगन्धमादनपर्वतं स्वच्छन्दं विहाराय जगाम। तत्र मन्दाकिन्या सुरम्य तटे प्रभासिकतासु सिकतासु विहरन्ती उर्वशी यदा पश्यति यत् पुरूरवा कदाचित् विद्याधरदारिकामुदयतीं साभिनिवेश बिलोकयति तदेवं दृष्ट्वा उर्वशी रोषणतां गता–

**''तम खलु मन्दाकिन्याः पुलिनेषु गता सिकतापर्वतकेलिभिः क्रीडन्ती।**
**विद्याधरदारिकोयवती नामतेजनः राजार्षिणा निध्यातेति कुपिता उर्वशी।।''**[२]

एवं कालिदासीय नाटकानां विभिन्नानां स्थालानां चित्रणेन तथ्यं एतेन तथ्येन स्पष्टं भवति यत् नायः सपत्नयपेक्षया स्वपति प्रणयमधिगन्तुं दुर्गारूपं धारयन्ति स्म। नाटकेषु अयमपि विचारः प्रस्तुतोऽस्ति यत् या हि नारी सपत्नीजनस्यानुपस्थितौ स्वपत्युः प्रणयमधिगच्छति सा श्लाघनीया भवति।

कालिदासयुगे समाजे नारी गृहीणी संज्ञया व्यपदिश्यते स्म। यस्यायमभिप्रायो यत् सा खलु गृहस्थ व्यवस्थापिका भवति। सर्वथासत्यमिदं यत् तदानीन्तने काले नारीणां गृहस्थप्रबन्धः सन्तानोत्पत्तिः शिशूनां लालनपालनम्, पतिसेवा, वृद्धानां सत्कारश्चेति मुख्यो धर्म आसीत्। महर्षि कण्वः स्वदुहितरं शकुन्तलां पतिगृहं गन्तुमुद्यतां उपादिशत्–

**''शूश्रूषस्व गुरून्, कुरू प्रिय सखीवृत्ति सपत्नीजने।**
**भर्तुविप्रकृतापि रोषणतया मा स्म प्रतीपं गमः।।**[३]

समाजे वृद्धानामाज्ञापालमपि कर्त्तव्य कोटिगतं भवति स्म। धर्मविषये–पि वृद्धानामाज्ञामवहेल्य न किञ्चिदनुष्ठीयते स्म– ''आर्य! धर्माचरणोऽपि परवशो यं जनः।''[४]

तत्कालीने समाजे नारी पत्युः सम्पत्तित्वेन स्वीक्रियते स्म। पतिगृहे प्रकामं सा अतिकष्ट–यन्त्रणा परिगता स्यात् पुनरपि तत्रत्यवास एव श्लाघनीय इति मन्यते स्म। कालिदासोऽभिज्ञानशाकुन्तले

---

१. मालवि० ४.३१०
२. विक्रमो. ४.३१३
३. अभि० शा० ४.१८
४. अभि० शा० अंक १ प्र. २१

चित्रितवान् - यत् नारी स्वपतिगृहं परित्यजति चेत् सा पितृगृहे अपि आश्रयं न लभते। एतादृशा नार्यः स्वपति गृहे दासीव निवासमपि उचितम् आसीत्।

**''यदि यथा वदति क्षितिपस्था त्वमसि किं पितुरुत्कुलया त्वया।।**
**अथ तु वेत्सि शुचि व्रतमात्मनः, पतिकुले तव दास्यमपि क्षमम्।।**[१]

तत्कालीनसमाजे नार्यः स्वपति न केवल देवमेव प्रत्युत् परमात्मरूपं मन्यन्ते स्म। स एव जीवितस्याधिष्ठाता सर्वस्वभूतश्च भवति स्म। तं प्रसादयितुं महतो महीयान् त्यागः क्रियते स्म– **''अद्य प्रभृति यां स्त्रियामार्यपुत्रः प्रार्थयते याचार्य पुत्रस्य समागमः प्रजायिनी तया सह मया प्रतिबन्धते वर्तितव्यम् इति।''**[२]

पतिरपि अपराधः सन पत्नीं क्षमायाचते स्म। कालिदासीय नाटकेषु तु पत्युः पत्न्या पादयोः पतनमपि प्रदर्शितम् - **''अपराधिनी मयि दण्डं संहरसि किमुद्यतं कुटिलकेशी। वर्धमासि विलासितं त्वं दासजनायत्रं कुप्यासि च।।'' नूनमिदानीमनुज्ञातं (इति पादयोः पतति)**[३]

कालिदासस्य नाटकैः तत्कालीनाया पत्न्या अटलपतिप्रणयस्यानुपमानि निदर्शनानि प्रदर्श्यन्ते। स्वपतिदेवस्य प्रसादाय स्वसौभाग्यं मानं च परित्यज्य सपत्न्या सह स्नेहं व्यवहारं करिष्यामिति निर्णयो अतीवानुपमो भवति। सपत्नया सह सादरं वर्तनस्य विचारः तदा स्फुटतरो दृश्यते यदा उर्वशी स्वपुत्रः जेष्ठायाम् मातरभिवादनाय कथयति - **''एहि वत्स! जेष्ठमातरमभिवन्दस्व।''**[४]

यदि पतिः कस्यचित् कर्मण्ये विषये पत्नी गृह्णीयात् तन्नूनं पत्न्याः सम्मानं भवति। अग्निमित्रो धारिणीमनुमान्य एव मालिविकां परिणीतवान्–

**''मालिविकामवगुण्ठनवतीं कृत्वा आर्यपुत्र इदानीमियां प्रतीच्छा।''**[५]

लज्जा खलु नार्याभूषणम्। शाकुन्तलनाटके शकुन्तला गुरूणां, वृद्धानां च आदर्शनारीणाम् अनुपमं विचारं लज्जां, विनम्रतां, सौन्दर्य, सेवां पतिव्रतां स्नेहिलतां च प्रदर्शयति।

**शिक्षा**

प्राचीनकाले शिक्षायाः व्यवस्था आसीत्। नारीणां शिक्षायाः स्थितिरपि सम्मानपूर्णा उन्नता चासीत्। शकुन्तलायाः लेखनकला प्रमाणभूतं नखैः पर्णैः लिखितं प्रेमपत्रमस्ति। शकुन्तलायां-उर्वश्याश्च

---

१. अभि० शा० अंक ५ पृ. २७
२. विक्रमो. ३.३०५
३. मालविका.३.२२
४. विक्रमो. ५.२५६
५. मालवि. ५.३५६

प्रणयनिवदेनं बाहुल्येन काव्यरूपेण अस्ति। साहित्यस्याध्ययनेन एतत्स्पष्टं भवति यत् सर्वेऽपि संस्कृतमवगच्छन्ति स्म। प्रियम्वदा संस्कृतश्लोकं स्मृत्वोच्चारयति। राजकुलेषु नाट्याचार्याय राजगृह-मित्रे वर्णनमस्ति यत् मालविकया बहुभिः दिनैः छलिकनामकं नाट्यं शिक्षितं प्रकान्तमासीत–तन्नाट्यं सा कियदम्यस्तवतीति।

''अचिरप्रयुक्तोपदेशं चलितं नाम नाट्यमन्तरेण कीदृशी मालविकेति नाट्याचार्यमार्यगणदासं प्रष्टुम्।''[1]

मालविकाग्निमित्रे दर्शितं यत् परिव्राजिका खलौषधज्ञानयुक्ता अप्यस्ति। यदा विदूषकः सर्पेण दष्टं तम छेदनं दाहो वा कर्तव्येऽथवा व्रणितस्थानात् करणीयां एतेन सर्पदष्टस्य प्राणाक्ष्यन्ते–

**छेदो वंशस्य दाहो वा क्षतेर्वा प्राणारक्ष्यन्ते।**
**एतानि दष्टमात्राणामायुष्यः प्रतिपत्रय।।**[2]

अतएव तस्मिन् काले नारीशिक्षायाः प्रचुरः प्रचारः आसीत्। अनेन विवेचनेन ज्ञायते यत् अस्मिन् काले नारीणां विषये पुरूषाणां भावना कीदृशी आसीत्। पुनरपि इदं तु स्पष्टमेव यत् नारी पुरूषस्य सहभागिनी आसीत्। तां विना पुरूषस्य कथमपि जीवनयात्रायां सुखपूर्वक चलितुं समर्थो न आसीत्।

१. मालविका. १.२६२
२. मालविक. ४.४

# श्रीमद्भगवद्गीतायां यज्ञविवेचनम्

**डॉ० मीरा द्विवेदी**

निखिलवेदशास्त्रोपनिषद्भूता कर्त्तव्यावबोधिका विश्वहितसम्पादिका जीवनोन्नायिका भारतीयसंस्कृतेर्भूमिका श्रीमद्भगवद्गीता पराशरसूनना लिपिबद्धा ईश्वरोक्ता दिव्या वाणी बर्वर्ति। ज्ञानभक्तिकर्मत्रिवेणीकल्पेयं नैराश्यकूपपतिताय विद्यत आशारश्मिसंचारिका। अत्र प्रोक्तेषु बहुविधविषयेषु यज्ञसिद्धान्तविवेचनं सविशेषं महत्त्वं धारयति निजसार्वभौमिकतया सार्वकालिकतया च। प्रस्तुते शोधलेखे श्रीमद्भगवद्गीतोक्तदिशा विवेच्यते यज्ञस्वरूपम्।

यज्ञशब्दः 'देवपूजासंगतीकरणदानार्थकाद् यज्धातोः नङ् कृते निष्पद्यते।'[१] सामान्यतः शब्देऽस्मिन् त्रिविधं कर्म सन्निहितम्– (१) देवपूजनम् (२) संगतीकरणम् (३) दानञ्च।

मानवजीवनं दैवाधीनम्। 'देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति'[२] वोक्तप्रकारेण दानदीपनद्योतनद्युस्थानसम्बद्धं सर्वं कार्यं देवनिमित्तकम्। श्रीमद्भगवद्गीतायाः षोडशाध्यायानुसारं निर्भयतापवित्रताज्ञाननिष्ठादानयज्ञशमदमस्वाध्याय-तपसारल्याहिंसासत्याक्रोधशान्तिदयानिर्लोभादयः दैवीसम्पत्तेर्विशेषताः सन्ति।[३] एतैर्गुणैर्युतानां देवभूतानां सत्कारः, संगतिः परोपकरणञ्चेति यज्ञः। यज्ञः बहुविधः। मनुस्मृत्यादिधर्मशास्त्रीयग्रन्थेषु पञ्चमहायज्ञाः सविशेषं निर्दिष्टाः।[४] गीतायां सकेतितं बहुविधानां यज्ञानामस्तित्त्वम्– "एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे।" - (गीता, ४.३२)

**सहजयज्ञः** - अत्रोक्तो यज्ञोऽग्नौ हव्यसामग्रीणां नास्ति नितान्तं क्षेपणकार्यं प्रत्युत चराचरात्मिकायाः सृष्टेः सुचारुतया सञ्चालनायास्त्येका परमोपयोगिनी व्यवस्था। यतो हि जडजङ्गमात्मके लोकेऽस्मिन् यत्किञ्चिद् विद्यते तस्य जन्मना सहैव यज्ञः जनितः प्रजापतिना–

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्।।** (श्रीमद्भगवद्गीता ३.१०)

---

१. (क) यजयाचयतविच्छप्रच्छरक्षो नङ्। अष्टाध्यायी (पाणिनि) ३.३.९०
(ख) वामन शिवराम आप्टे, संस्कृत हिन्दी कोश, ८२३

२. निरुक्तम्, ७.४.१५

३. श्रीमद्भगवद्गीता, १६.१-३

४. मनुस्मृतिः, ३.७०-७२

एवम् अभीष्टसंसिद्धये यज्ञो नाम नैसर्गिकी सहजव्यवस्थाजीवनस्य। निखिले जगति यज्ञः सहजरूपेण प्रचलति। यस्य यत् कर्म तत्तस्य यज्ञः। यज्ञस्य सहजकर्मणा स्वभावकर्मणा घनिष्टः सम्बन्धः। यथा– सूर्यस्य सहजं कर्म प्रकाशोर्जादानं, जलस्य जीवनं, वायो प्राणाः, भूमेरन्नम् अन्तरिक्षस्य स्थानदानं, मेघस्य वर्षणमिति सर्वे कुर्वन्ति निजसहजकर्माणि। कर्म विना न कोऽपि क्षणमपि तिष्ठति। परं समस्तं कर्म यज्ञार्थभावनाया क्रियमाणं श्रेयसे सम्पद्यते–

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।**
**तदर्थं कर्म कौन्तेय! मुक्तसङ्गः समाचर।।**[१]

एतेन सिध्यति यत् निष्कामभावनया यज्ञनिमित्तकं क्रियमाणं कर्म मोक्षदायकम्। मीमांसकाः स्वर्गसुखमेव परमं साध्यं मन्वते। तन्मते स्वर्गसुखदायकं कर्म बन्धनं न जनयति परं गीताया दृष्टिः स्वर्गफलं विहाय मोक्षस्योपरि केन्द्रिताऽस्ति यतोहि स्वर्गदायकं कर्म प्रतिबन्धकमेव। अतः गीता यज्ञार्थकर्मणे उपदिशति। यज्ञार्थकर्मणि समग्रं प्रविलीयते–

**गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतसः।**
**यज्ञायाऽऽचरतः कर्म समग्रं प्रविलीयते।।**[२]

यज्ञार्थकर्म वस्तुतः कर्मयोग एव यतोहि क्रियतेऽत्र निष्कामबुद्ध्या जगद्धिताय नैसर्गिकं कर्म। निष्काममूलस्य यज्ञस्य व्यापकार्थवत्तां महाभारतमपि समर्थयति–

**यज्ञो यष्टव्य इत्येव यो यजत्यफलेप्सया।**

**अनुयज्ञं जगत्सर्वं यज्ञश्चानुजगत्सदा।**

**नायं लोकोऽस्त्ययज्ञानां परश्चेति विनिश्चये।।**[३]

तात्पर्यमिदमस्ति यद् यज्ञः चराचराणां जीवनव्यवस्था। यत्र यज्ञः तत्र जगत्, यत्र जगत् तत्र यज्ञः। उभौ परस्पराश्रयिणौ स्तः। यज्ञं बिना लोकं परलोकं वा किमपि न साध्यम्।

**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम!**[४]

**यज्ञभेदाः –** गीतायां नैकेषां यज्ञानां वर्णनं लभ्यते। समासेन तेषां वर्णनं प्रस्तूयते।

---

१. श्रीमद्भगवद्गीता, ३.९
२. श्रीमद्भगवद्गीता, ४.२३
३. महा.शान्ति. २६८.३१, ३४. ४०
४. श्रीमद्भगवद्गीता, ४.३१)

**ब्रह्मयज्ञः –** ब्रह्मसाधनैः ब्रह्मत्वप्राप्तये यद् यजते तद् ब्रह्मयज्ञः। यथा कथयति गीता–

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना।।**[१]

अत्र अग्निर्ब्रह्म, कर्ता ब्रह्म, हवनक्रिया ब्रह्म, फलमपि ब्रह्म। बाह्यसामग्रीणां नास्त्यत्र काप्यावश्यकता। अत्रात्मसमर्पणबुध्या साधकः ब्रह्मनिष्ठामधिगच्छति। "ब्रह्मैव सन् ब्रह्माप्नोति।"[२] "सर्वं खल्विदं ब्रह्म"[३] इति भावयन् ब्रह्मरूपतानुसन्धानात् लोकेऽभिन्नरूपसिद्धत्वाच्च लोकोपकारं करोति। आत्मनः प्रतिकूलानि परेषां न समाच ज्ञानी। "ब्रह्मार्पणेति." इत्यस्मिन् श्लोके यत्किमपि ब्रह्मपदेन प्रोक्तं तत्सर्वं दृश्यतेऽधोलिखिते श्लोके 'अहमिति' पदेन–

**अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम्।**
**मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम्।।**[४]

एष यज्ञः जीवात्मयज्ञत्वेनाप्यवबोधयितुं शक्यते यतोहि एतस्मिन् यज्ञे जीवात्मा अहम्भावं जुहोति। "ब्रह्मविद् ब्रह्मैव भवति।" 'ब्रह्मार्पणमिति' 'अहं हुतमिति' अंशद्वयेन स्पष्टं भवति यज्ञे आत्मार्पणस्य लोकोपकारिणी भावना सन्निहितास्ति। 'अहमिति' श्लोके क्रतुस्वधामन्त्राज्याग्न्यादयस्सर्वे विषयाः अहं पदेन निर्दिष्टाः। ब्रह्मेति अहमिति पदद्वयं समानार्थकम्। सर्वात्मसमर्पणविधिना निष्कामबुद्ध्या क्रियमाणं कर्म ब्रह्मयज्ञे ब्रह्मरूपताया अनुसन्धानात् मोक्षदायकं भवति।

**दैवयज्ञः –** देवा इज्यन्ते येन यज्ञेन सः दैवयज्ञः। कर्मयोगिनो देवार्चनात्मके यज्ञे निष्ठां धारयन्ति। गीता कथयति "दैवमेवापरे यज्ञं योगिनः पर्युपासते" – (भ.गी. ४.२५) यदा कर्मकाण्डेषु काम्यबुद्ध्या सूर्याग्निचन्द्रेन्द्रवरुणादिवैदिकदेवानां पूजनं क्रियते तदा एष यज्ञः पुत्रपौत्रायुष्यगौधनधान्यादीनां कामनां पूरयति। ऋग्वेदेऽपि कथितमस्ति–

**मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः।**
**वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे।।**[५]

गीतायां प्रतिपादितो दैवयज्ञः श्रौतस्मार्तपरकं विधिविधानमेव नास्ति प्रत्युत देवविशेषं लक्ष्यीकृत्यात्र द्रव्यादिभिः निर्ममत्वसाधनाय योगी कर्तव्यभावनया फलाकांक्षां विनैव ब्रह्माग्नौ स्वार्थपरतां समर्प्य

---

१. श्रीमद्भगवद्गीता, ४.२४
२. बृहदारण्यकोपनिषद्, ४.४.६
३. छान्दोग्योपनिषद्, ३.१४.१
४. श्रीमद्भगवद्गीता, ९.१६
५. ऋग्वेद १.११४.८

ब्रह्मरूपतां भजति। बह्नौ तिलतण्डुलघृतयवादिक्षेपणकाले 'सूर्याय स्वाहा, सूर्याय इदं न मम, अग्नये स्वाहा अग्नये इदं न मम' इत्यादिव्याहृतिषु निहिता निर्ममत्वभावना एव बलवती भवति। लोकहितसम्पादनाय योगी देवान्प्रीणयति।

मानवजीवनं देवानां पूजनसंगतीकरणदानसमाश्रितम्। अन्नधान्यवनस्पतिजलप्रकाशादीन् मानवो देवेभ्य एव गृह्णति। अतः मानवस्यापि कर्तव्यमस्ति यत् यज्ञमाध्यमेन देवान् सन्तर्पयतु। तेषु सन्तृप्तेष्वेव जगदुन्नतिः शक्या। गीतायाः संकेतोऽस्ति विषयेऽस्मिन्–

**देवान्भावयतानेन ते देवा भावयन्तु वः।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ।।**

**इष्टान्भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः।।**[१]

अतः मानवो देवप्रीत्यर्थं यजित्वा प्रतिफले सुखान्वितं समृद्धिमन्तं जीवनं प्राप्तुं शक्नोति। कालिदासोऽपि श्लोकेनामुना प्रभावितः सन् निर्दिशति संगतीकरणात्मकयज्ञकर्मोपादेयताम् अभिज्ञानशाकुन्तले प्राग्भरतवाक्ये–

**भवतु तव विडौजा प्राज्यवृष्टिः प्रजासु त्वमपि विततयज्ञो वज्रिणं प्रीणयस्व।**
**गणशतपरिवर्तैरेवमन्योन्यकृत्यैर्नियतमुभयलोकानुग्रहं श्लाघनीयैः।।**[२]

तात्पर्यमिदमस्ति यत् देवाः मानवान् भावयन्ति, मानवाश्च देवान् प्रीणयन्ति। एवंभूते सत्येव सृष्टिचक्रं सञ्चरति। वायुजलसूर्यपृथ्वीचन्द्रादयः प्रकृत्यां स्थितानि अन्यान्यतत्त्वानि च निजदिव्यगुणैः शक्त्या च जलान्नादिदानमाध्यमेन निजदेवत्वं ख्यापयन्तः मानवजीवने साहाय्यं कुर्वन्ति।

**अन्ये यज्ञाः**- ब्रह्मयज्ञः दैवयज्ञश्च साध्यभूतौ स्तः। एतयोः सम्पादनं साधनभूतैर्द्रव्यादियज्ञैः क्रियते। ज्ञानिनां निष्ठः ब्रह्मयज्ञे भवति, कर्मयोगिनां च दैवयज्ञे। अन्यैर्यज्ञैः चित्तशुद्धिमाध्यमेन ब्रह्मयज्ञस्य दैवयज्ञस्य च योग्यता आयाति। अधोलिखिते श्लोके गीता साधनभूतयज्ञानां तेषां याजकानां निर्देशं करोति–

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे।**
**स्वाध्याययज्ञानयज्ञाश्च यतयः संशितव्रताः।।**[३]

---

१. श्रीमद्भगवद्गीता, ३.११, १२
२. अभिज्ञानशाकुन्तले, ७.३४
३. श्रीमद्भगवद्गीता, ४.२८

श्रीमद्रामानुजाचार्यो निजभाष्ये कथयति "केचित् कर्मयोगिनः, द्रव्ययज्ञाः न्यायतो द्रव्याण्युपादाय देवार्चने प्रयतन्ते, केचिच्च दानेषु, केचिच्च योगेषु, केचिच्च होमेषु एते द्रव्ययज्ञाः। केचित्तपायेज्ञाः कृच्छ्रचान्द्रायणोपवासादिषु निष्ठां कुर्वन्ति। योगयज्ञाश्चापरे पुण्यतीर्थपुण्यस्थानप्राप्तिषु निष्ठां कुर्वन्ति। केचित्स्वाध्यायाभ्यासपराः, केचित्तदर्थज्ञानाभ्यासपराः।"[१]

अत्र यद्यपि नास्ति विभागः साध्यसाधनत्वेन तथापि 'द्रव्याण्युपादाय देवार्चने प्रयतन्ते' इत्यनेन वाक्यांशेन सिध्यति यत् द्रव्ययज्ञः, तपोयज्ञः, योगयज्ञः, स्वाध्याययज्ञः, ज्ञानयज्ञश्च साधनभूतयज्ञा एव। समासेन एतेषां वर्णन क्रियते–

**द्रव्ययज्ञः**- शंकराचार्यभाष्यानुसारं[२] तीर्थेषु यज्ञबुद्ध्या द्रव्यविनियोगः द्रव्ययज्ञः। अस्य कर्तारः द्रव्ययज्ञाः। रामानुजाचार्यस्य मते देवतार्चनाय निमित्तीभूतं द्रव्यदानयोगहोतादिविधानं द्रव्ययज्ञः।[३] गीतायाः पैशाचभाष्यकारश्रीमद्हनुमतोऽनुसारमपि हिरण्यगवादीनां दानं द्रव्ययज्ञः।[४] द्रव्ययाजकाः दानमेव यज्ञत्वेन सेवन्ते।

दानं विना यज्ञकार्यं न सम्भवति। दानन्तु सत्वरजस्तमोभेदात् त्रिविधम्। यद्दानं निरपेक्षभावेन देशकालपात्रानुरूपं सात्त्विकभावेन क्रियते तत् यज्ञरूपं भवति।[५] अयं यज्ञः जनोपयोगी लोककल्याणकारी च भवति। यतोहि धनिकाः जनकल्याणाय जगद्धिताय स्वधनं दानादिरूपेण जुहोति। वापीकूपतडागमन्दिरशालादीनां निर्माणायापि धनादिकं यच्छति। इदं सर्व यदा लौकिककाम्यभावनां विना सम्पाद्यते तदा पापनिवृत्तिकारकं चित्तशुद्धिदायकं भूत्वा यज्ञरूपे मोक्षमार्ग प्रशस्ती करोति।

**तपोयज्ञः–** अयं यज्ञः चित्तात्मशुद्धिहेतुत्वाद् ब्रह्मदैवादियज्ञानां साधनभूतः। अत्र चान्द्रायणादिव्रतोपवाससाधनैः तपस्विनः शीतोष्णद्वन्द्वानि सोढुं शक्नुवन्ति। गीतायाः सप्तदशाध्याये कायिकं वाचिकं मानसञ्च तपः सत्त्वादिगुणत्रयविभागेन पुनः त्रिविधं प्रोक्तम्। देवद्विजगुरुप्राज्ञपूजनशौचार्जवब्रह्मचर्याहिंसानुष्ठानं कायिकं तपः मन्यते।[६] यतोहि एतत्सर्वं शरीरमाध्यमेन साध्यम्। अनुद्वेगकरसत्यप्रियहितभाषणं स्वाध्यायानुष्ठानं च वाङ्मयतपरुच्यते।[७] शान्तिसौमनस्यसंयमभावसंशुद्धिसंधारणञ्च

---

१. रामानुजभाष्यम् - (श्रीमद्रामानुजाचार्यः) श्रीमद्भगवद्गीता, शांकरभाष्याद्येकादशटीकोपेता - प्रथमोभागः, परिमल-पब्लिकेशन्स, दिल्ली, १९८५, पृ. ४३०
२. शांकरभाष्यम्, पूर्वोक्तम्, पृ० ४३०
३. रामानुजभाष्यम् (श्रीमद्रामानुजाचार्यः) पूर्वोक्तम्, पृ० ४३०
४. पैशाचभाष्यम् (श्रीमद्हनुमान्), पूर्वोक्तम्, पृ. ४३१
५. श्रीमद्भगवद्गीता, १७.२०, २४
६. पूर्वोक्तम्, १७.१४
७. पूर्वोक्तम्, १७.१५

मानसतपः कथ्यते।[१] एतत् त्रिविधिं तपः यदा फलाकांक्षाविरहिते सति परमश्रद्धयाऽनुष्ठीयते तदा तस्य सात्त्विकं स्वरूपं यजरूपतां भजते।[२]

**योगयज्ञः –** श्रीमद्भगवद्गीतायां योगस्यानुष्ठानमपि यज्ञात्मकं प्रतिपादितम्। योगिजनः चित्तवृत्तिं निरुध्य यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधियोगसाधनैः मनःप्राणेन्द्रियाणि संयम्य आत्मनः परेषां हितार्थं लोकसंग्रहात्मकं कृत्यं करोति। अस्मिन् यज्ञे आत्मसंयमस्य भावना सर्वोपरि भवति। यथानिर्देशो विद्यतेऽधोलिखिते श्लोकद्वये–

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति।**
**शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति।।**

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते।।**[३]

प्राणायामोऽष्टाङ्गयोगस्यास्त्येकमङ्गम्। गीतायां प्राणायामयज्ञस्यापि चर्चास्ति। एतस्मिन् यज्ञे प्राणायामपरायणो योगी पूरककुम्भकरेचकविधिभिः श्वासप्रश्वासयोः गती निरुध्याहारादिकं नियन्त्र्य प्राणान् प्राणेषु जुहोति–

**अपाने जुह्वति प्राणं प्राणेऽपानं तथा परे।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः।।**

**अपने नियताहाराः प्राणान्तप्राणेषु जुह्वति।।**[४]

अनेन प्रकारेण योगशास्त्रानुकूलं योगं विधाय रागद्वेषविरहितो सन् देहातिरिक्तशुद्धात्म-स्वरूपानुसन्धानात् ज्ञानदीप्तो योगी मोक्षमार्गानुगामी भवति। यावत् पर्यन्तं जगति निवसति तावत् पर्यन्तं जगद्धितार्थं चरति।

**स्वाध्याययज्ञः –** यत्किमपि गुरोर्गृहीतं तेषां सर्वेषां वेदादिशास्त्राणां सततम् अभ्यासः स्वाध्याययज्ञः। एतस्मिन् यज्ञे आत्मोन्नतये समाजकल्याणाय चावश्यकीभूतानां विद्यानाम् अर्जनम् अभ्यासश्च क्रियेते।

**ज्ञानयज्ञः –** साधनभूतेषु यज्ञेषु ज्ञानयज्ञः प्रमुखः। ज्ञानमाध्यमेन सम्पाद्यतेऽसौ यज्ञः। ज्ञानं द्विविधम् - भौतिकं भौतिकेतरञ्च। वेदोपनिषदादिषु इदं ज्ञानं परापराविद्यारूपेण प्रतिपादितम्।[५] जगद्धिताय

१. पूर्वोक्तम्, १७.१६
२. पूर्वोक्तम्, १७.१७, २४
३. श्रीमद्भगवद्गीता, ४.२६-२७
४. श्रीमद्भगवद्गीता, ४.२९३०
५. अथर्ववेदः, ११.८.२३, ईशावास्योपनिषद्, ९,१०

लोककल्याणाय द्वयोः सामञ्जस्यम् अभीष्टम्।[१] लोकेऽस्मिन् व्यवहारपरिस्पन्दनाय अपराविद्यायाः सृष्टिविद्याया ज्ञानमपेक्ष्यते। पारलौकिकाभ्युत्थानाय पराविद्याया ज्ञानमपेक्षते। पूजनदानसंगतीकरणात्मके ज्ञानयज्ञे यत्किमपि ज्ञानमस्मदधीनं तत्सर्वं परेषां कृतेऽध्यापनं ज्ञानयज्ञः। गुरुं देवं मत्वा तस्य सत्कारः करणीयः। गुरोः सत्कारः शिष्यस्य कर्तव्यः, शिष्ययोग्यतावर्धनं गुरोः कर्तव्यम्। उभौ परस्परं भावयन्तौ यज्ञं सम्पादयन्तौ निजोन्नतिं च कुर्याताम्। ज्ञानयज्ञः ब्रह्मत्वप्राप्तये साधनम्। "सर्वं खल्विदं ब्रह्म" (छां. उप. ३.१४.१) इति श्रुतिवाक्यसम्मतं ज्ञानं लभते योगी। आत्मरूपदर्शनात् सः शोकमुत्तरति। तत्र को मोहः कः शोकः एकत्वमुनपश्यतः।

अनेन प्रकारेण ज्ञानयज्ञस्य परिणति ब्रह्मयज्ञ एव भवति ब्रह्मत्वसाधनादेवऽसौ यज्ञः सर्वविधयज्ञेषु प्रशस्यतमो मन्यते–

**श्रेयान्द्रव्यमयज्ञाज्ज्ञानयज्ञः परन्तपः।**
**सर्वं कर्माखिलं पार्थ जाने परिसमाप्यते।।**[२]

गीतायां बहुत्र ज्ञानयज्ञस्य महिमा गीता कर्मणः श्रेष्ठता च प्रतिपादिता।[३] कर्मफलस्य सर्वस्यान्तर्भावो ज्ञाने भवति। कामेषु काम्यमानेषु फलेषु संकल्पं विहाय क्रियमाणानि कर्माणि ज्ञानाग्निमनुप्रविश्य दंदह्यन्ते।[४]

अनेन प्रकारेण गीतायां ब्रह्मदेवद्रव्यतपज्ञानस्वाध्यायादयः बहुविधाः वेदविहिताः यज्ञाः निर्दिष्टाः। एते सर्वे यज्ञास्त्रिगुणात्मकाः सन्ति। यतोहि चराचरात्मकं जगदिदं त्रिगुणात्मकमेव। श्रद्धात्रयविभागनामके सप्तदशाध्याये यस्य त्रिगुणात्मकता प्रतिपादिता।

**सात्त्विकयज्ञः –** फलेप्साविरहितः शास्त्रसम्मतो यो यज्ञः समाहितचेतसा याजकेन कर्तव्यं मत्वा सम्पाद्यते सः सात्त्विकयज्ञः–

**अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते।**
**यष्टव्यमेवेति मनः समाधाय स सात्त्विकः।।**[५]

---

१. ईशावास्योपनिषद्, ११
२. श्रीमद्भगवद्गीता, ४.३३
३. ज्ञानाग्निः सर्वकर्माणि., (गीता, ४.३७) नहि ज्ञानेन सदृशम्, (गीता, ४.३८)
४. यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः।
ज्ञानाग्निदग्धकर्माणां तमाहुः पण्डितं बुधाः॥ श्रीमद्भगवद्गीता, ४.१९
५. श्रीमद्भगवद्गीता, १७.११

**राजसयज्ञः** – प्रदर्शनभावनया फलाकांक्षां मनसि सन्निधाय दम्भभावेन यदिज्यते तत्सर्वं राजसयज्ञः। यज्ञकर्तुश्चेतसि स्थिरतायाः शान्तेरभावात् एष यज्ञो दुःखं ददाति–

**अभिसन्धाय तु फलं दम्भार्थमपि चैव यत्।**
**इज्यते भरतश्रेष्ठं तं यज्ञं विद्धि राजसम्॥**[1]

**तामसयज्ञः** – शास्त्रविधिं विना श्रद्धाविरहितोऽन्नदानादिशून्यो मन्त्रहीनो दक्षिणावर्जितो यज्ञस्तामसः कथ्यते। एतेन न तु याजकस्य लाभो न वा यजमानस्य। सर्वेषामहितमेवैतेन सम्भाव्यते–

**विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम्।**
**श्रद्धाविरहितं यज्ञं तामसं परिचक्षते।।**[2]

पूर्वोक्ताः ब्रह्मदैवादियज्ञाः सर्वे सत्त्वादिगुणवैशिष्ट्यात् त्रिविधाः भवन्ति। एवं बहुविधा यज्ञाः श्रीमद्भगवद्गीतायां प्रतिपादिताः।

**गीतायां प्रतिपादितस्य यज्ञस्य व्यावहारिकता** - उपर्युक्तेन विवेचनेन विशदी भवति यत् यज्ञोऽग्नौ हव्यसामग्रीणां क्षेपणमात्रं नास्ति प्रत्युत जीवनव्यापिनी जगद्व्यापिनी स्वाभाविकी क्रिया विद्यते। आजन्मनः मृत्युपर्यन्तम्, आसृष्टेः प्रलयपर्यन्तं प्रचलति यज्ञक्रिया सर्वेषां चराचराणां जीवने। गीतायास्तृतीयाध्याये परमात्मना सञ्चाल्यमानं यज्ञचक्रं वर्णितमस्ति। अनेनैव जगतः स्थितिर्विद्यते। एतेन विना सृष्टिचक्रमपि नैव चलति। यथोक्तं निम्नांकितेषु श्लोकेषु–

**अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः।**
**यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः॥**

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्॥**

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः॥**[3]

महाभारते[4] मनुस्मृतावपि[5] यज्ञचक्रस्योल्लेखः प्राप्यते। इदं यज्ञात्मकं सृष्टिचक्रं प्राणिमात्रस्य कर्माधीनम्। अतः सर्वेषां कर्तव्यमस्ति यत् यज्ञार्थकर्म करणीयम्। तत्र लोकोपकारस्य सर्वभूतहितकारिणी

१. श्रीमद्भगवद्गीता, १७.१२
२. गीता, १७.१३
३. श्रीमद्भगवद्गीता, ३.१४–१६
४. यज्ञात्प्रजा भवति नभसतोऽम्भ इवामलम्।
अग्नौ प्रास्ताहुतिर्ब्रह्मन्नादित्यमुपगच्छति।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥ शान्तिपर्व, २६.१०, ११
५. मनुस्मृतिः, ३.७६

भावना निगूढाऽस्ति। ये आत्मोदरम्भरा निजतुष्टयेऽन्नादिति संस्कुर्वन्ति ते पापभाजः। ये अन्नादीनि संस्कृत्य तैः प्रथमं यज्ञं कुर्वन्ति देवनृभूतादीनि सन्तर्प्य तदनन्तरमवशिष्टं भुञ्जन्ति ते सर्वपापैः विमुच्यन्ते–

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्विषैः।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्॥**[१]

वेदस्यापि निर्देशोऽस्ति यत् "केवलाघो भवति केवलादी।[२]

मानवो विवेकशीलः स्वतन्त्रज्ञानेच्छाक्रियाधरो जीवः। अतः यदि स यज्ञचक्रानुकूल्येन चरिष्यति तदा सुखं लप्स्यते, यदाऽस्य प्रातिकूल्येन चरिष्यति तदाऽधोगतिं यास्यति गीताया निर्देशोऽस्त्यस्य कृते यत् जीवनमेव निष्फलं तस्य।

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः।**
**अघायुरिन्द्रियारामो मोघ पार्थ स जीवति॥**[३]

**लोकसंग्रहः यज्ञश्च –** यज्ञस्य लोकसंग्रहेण घनिष्ठः सम्बन्धः। लोकसंग्रहे भवति लोकोपकारस्य भावना। लोकानां जनानां देशवासिनां वा संग्रहः अर्थात् सम्यक् प्रकारेण ग्रहणं धारणमिति लोकसंग्रहः। लोकसंग्रहात्मके यज्ञे जनानां हिताहितं समीक्ष्य सर्वेषां कल्याणेच्छा सर्वोपरि विलसति। लोकसंग्रहो यज्ञार्थकर्मणा सम्पाद्यते। राधाकृष्णन्महाभागानुसारं लोकसंग्रहस्याभिप्रायः समाजे संसारे वा जनानां पारस्पारिकं सामञ्जस्यमस्ति। जगतो भौतिकतापनिवारणं तेषां कृत्याकृत्यनियन्त्रणञ्च पारस्परिकसामञ्जस्येन विनाऽपूर्णम्। अनेन समाजस्य नैतिकदृशाऽधोपतनं नैव सम्भाव्यते। सामान्यजनजीवने भ्रातृभावस्य प्रतिष्ठापि भवत्येतेन।[४]

लोकमान्यबालगंगाधरतिलकानुसारमपि लोकसंग्रहे सर्वहितकारिणी निजोत्सर्गप्रचारिणी महती भावनाऽनुस्यूता विद्यते। न केवलं मानवानां प्रत्युत त्रिलोकस्य निखिलजीवानां धारणं पोषणं लोकसंग्रहेण शक्यम्।[५]

एवं गीतोक्तदिशा मानवजीवने मानवेतरजीवने च प्रतिक्षणं यज्ञश्चलति। यतोहि जीवने "नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।" मानवो कर्मशीलोऽतो यत् किञ्चित्कुर्याद् यज्ञभावनयैव

---

१. श्रीमद्भगवद्गीता, ३.१३
२. ऋग्वेदः, १०.११७.६
३. श्रीमद्भगवद्गीता, ३.१६
४. राधाकृष्णन् (भगवद्गीता हिन्दी अनुवाद) पृ० १६८
५. गीतारहस्य (बाल. गं. तिलक, हिन्दी अनुवाद) २००२, पृ. २१७

कुर्यात्। देवपूजासंगतीकरणदानात्मकं यज्ञार्थकर्म कृत्वा सः दोषभाक् न भवति। परं यत् कर्म स्वार्थनिमित्तिकं तत् सम्पाद्य पतनोन्मुखो भवति। गीतायां श्रेयस्कामिने श्रीयोऽधिगन्तु द्विधा निष्ठा प्रोक्ता ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् (३.३)। अर्थात् केचिद् ज्ञाननिष्ठां भजन्ति केचिच्च कर्मनिष्ठाम्। केचिद् ज्ञानमार्गानुगामिनः केचिच्च कर्ममार्गानुगामिनः। फलतः यज्ञस्य उभयविधस्वरूपप्रकाशनं करोति गीता। ज्ञानिनः ब्रह्मयज्ञं सम्पाद्य मुक्तिं भजन्ति द्रव्यादियज्ञं विधाय च। यथा–

**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः**[१]**।**

पूजासंगतिदानपरोकारात्मके यज्ञे ईश्वरो निवसति। अतः कथयति गीता – "तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्"। अतः लोकोपकारनिमित्तकं यज्ञकर्म सर्वैः विधातव्यम्।

---

१. गीता, ४.३०

# नीतेः शास्त्रीयं स्वरूपम्

**डॉ. हेतरामकछवाहः**

भगवान् श्रीकृष्णो भगवद्गीतायाम् अर्जुनं प्रति स्वविभूतीनां वर्णनप्रसंगे दशमाध्याये प्राह– **'नीतिरस्मि जिगीषताम्'** इति। अर्थात् विजिगीषूणां विजयस्योपायभूता नीतिरस्म्यहम्। श्रीमद्भागवतस्य श्रीमद्भगवद्गीतायाश्च प्राचीनटीकाकारैः श्रीश्रीधरस्वामिपादैः भगवद्वचनस्यास्य व्याख्यां कुर्वद्भिः इदं प्रतिपादितम्--'जेतुमिच्छतां सम्बन्धिनी सामाद्युपायरूपा नीतिरस्मि। नीतिशब्दस्यार्थः साम-दान-भेद-दण्डादिरूपा शास्त्रविहिता राजनीतिरस्ति। किञ्च वाल्मीकिरामायणे सुन्दरकाण्डे यदा हिं सीतान्वेषणाय दूतभूतो हनूमान् सीतावृत्तं परिज्ञाय निवर्तते, तदा मनसि चिन्तयति यद्धि वृत्तं मयावगतम्, तदर्थं रामरावणयोर्युद्धं नूनमपरिहार्यम्। एतदर्थं शत्रोर्बलादिकं राजनीतिनैपुण्यमपि यद्यवगतं स्यात्तर्हि अस्माकं कृते रामेण सूचनाय च कल्याणकरं भवेत्। एवं हनूमान् चिन्तयति–

**''न साम रक्षःसु गुणाय कल्पते न दानमर्थोपचित्तेषु युज्यते।**
**न भेदसाध्या बलदर्पिता जनाः पराक्रमस्त्वेष ममेह रोचते।।''**[१]

अर्थात् नीतेः भेदेषु साम-दान-भेद-दण्डेषु[२] मुख्यतमो दण्ड एव। अस्य फलितार्थोऽयमेव– ''अस्मिन् जगति राज्यप्रवर्तनकालाद् अद्यावधि यावत् खलु ये राजानः यया सुनीत्या[३] विजयमाप्नुवन् तेषां विजयिनी या नीतिस्तदहमेव'' इति। एतेन इदमेव प्रतिफलति यत् सुनृपतिभिः स्वनीत्या स्वराज्यस्थापनाय सुशासनाय[४] च विजयिनी यशस्विनी च या नीतिराश्रिता सैव राजनीतिः साम-दान-दण्ड-भेदरूपेति। एतत् सन्दर्भ एव भारतीयजीवनदर्शनानुयायिन आवेदकालाद् अद्यावधि यावद् ये किल भारतीया शुभ्रयशसो भूपा अभूवन्, तेषु नूनं स्वायम्भु मनुमारभ्य हरिश्चन्द्र-मान्धातृ-राम-ययातियुधिष्ठिरादयः

---

१. वाल्मीकिरामायणे सुन्दरकाण्डे ४१.३

२. 'सामादीनामुपायानां चतुर्णाम्।' मनुस्मृतौ ७.१०९

३. दमो दण्ड इति ख्यातस्तस्माद् दण्डो महीपतिः।
तस्य नीतिर्दण्डनीतिनयनान्नीतिरुच्यते।। शुक्रनीतिः १.१५६

४. राजाऽस्य जगतो हेतुर्वृद्धेर्वृद्धाभिसम्मतः।
नयनानन्दजननः शशांक इव तोयधेः।। (कामन्दकीयनीतिसारः १.९)

खलु मूर्धन्यभूता राजानो भगवत आज्ञानुवर्तिनो जाताः। किञ्च एतेषामेव आसमुद्रक्षितीशानां पुण्यश्लोकानां यशांसि वेदे, उपनिषदि, मनुस्मृत्यादिषु-रामायणे, महाभारते, शुक्र-बृहस्पति-विदुर-भर्तृहरि-चाणक्यादिप्रवर्तितराजनीतिषु पुष्कलं विवृतानि सन्ति।

मया किल भारतीयप्राचीनराजशास्त्रार्थशास्त्रविभागे प्राीचनभारतीयराजनीतिविषयकशास्त्ररक्षणाय विद्यारक्षणाय वा पूर्वसूरिप्रवर्तितसन्मार्गेण प्रस्थापिते सिद्धान्तेऽध्यापयता अनुभूतं विद्यारक्षणाय धर्मशास्त्र-साहित्यशास्त्र-स्मृतिदर्शन-शुक्रनीति-वृहस्पतिनीतिप्रभृतिसहितविभिन्नशास्त्रजातस्य ज्ञानमावश्यकम्, येन राज्ञा स्वराज्ये सुनीतिस्थापनाय सौकर्यं स्यात्।

किञ्च विद्याक्षेत्रनिर्धारके अनुकल्पे आचार्यकामन्दकेन उक्तम्–

**''आन्वीक्षिकीं त्रयीं वार्तां दण्डनीतिं च पार्थिवः।**
**तद्विद्यैस्तत्क्रियोपेतैश्चिन्तयेद् विनयान्वितः।।**

**आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती।**
**विद्याश्चतस्त्र एवैता लोकसंस्थितहेतवः।।''**[१] इत्युक्तम्।

अतः वेदाध्ययनपुरस्सरं निखिलशास्त्रसमूहस्य यन्नवनीतं तदेव नूनं राजनीतितत्त्वमिति। तच्च वश्यमवधेयं ज्ञेयं व्यवहारणीयञ्च। का खलु राजनीतिविषायिका नीतिरिति जिज्ञासायां कामन्दकीयनीतिसारस्योपाध्यायनिरपेक्षाटीकायामुक्तम्– **''प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीताया फलसिद्धौ देशकालानुकूल्ये सति यथासाध्यम् उपायसाधनविनियोगलक्षणा क्रिया नीतिः''**[२] इति। अन्यत्र च नीतौ एतदनुसारमेव वचनं लभ्यते नीतिविषये। यथा–

**''कः देशः कानि मित्राणि कः लाभ को व्ययागमौ।**
**कश्चाहं का च मे शक्तिः इति चिन्त्यं मुहुर्महुः।।''**

अतः देशकालानुसारिणी विवेकपुरस्सरा या क्रिया (व्यवहारः) सा नीतिपदेनोच्यते शास्त्रे। एवं हि शास्त्रान्तरेष्वपि बहूनि प्रशंसापराणि वचनान्युलभ्यन्ते। यथा शिशुपालवधे महाकविना माघेनोक्तम्–

**''अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।**
**शब्दविद्येव नाभाति राजनीतिरपस्पशा।**[३]**''**

---

१. कामन्दकीयनीतिसारः २.१-२

२. कामन्दकीयनीतिसारे उपाध्यायनिरपेक्षाटीकायाम् १.६

३. शिशुपालवधमहाकाव्यम् २.११२

यथा व्याकरणशास्त्रम् अ-पस्पशं (पस्पशह्निकभाष्यरहितं) न आद्रियते, तथैव राजनीतिशास्त्रमपि अप-स्पशं (चररहितं) न शोभते। यथा पाणिनीयसूत्रानुवर्ति भाष्यन्यासग्रन्थलसितं काशिकादिवृत्तिशोभितधातुपाठादिविराजितमपि व्याकरणशास्त्रम् अ-पस्पशं (परस्पश्यह्निकभाषरहितं न शोभते, तथैव चाणक्यादिनीति-सूत्रानुवर्ति पदन्यासलसितं शोभनजीवनोपायनिरूपकं सन्निबन्धनं (शासनपट्टकादिशोभितं) राजनीतिशास्त्रमपि अपस्पशं (चररहितं) न आद्रियते। किञ्च रातजनीतौ यथा गुप्तमन्त्रणमावश्यकं तथैव व्याकरणशास्त्रे पस्पशाह्निकभाष्यावश्यकत्वं तत्र भगवता पतञ्जलिना उक्तम्।

आदर्शजीवनेऽद्वितीयं महत्त्वं दरीदृश्यते नीतेः। लौकिकं पारलौकिञ्च कल्याणं नीतिपालनेनैव जायते। मर्यादापुरुषोत्तमेन नीतिनिपुणभगवता श्रीरामचन्द्रेण प्राणिनां कल्याणाय स्वयमेवानुकरणं क्रियते नीतेः। यथा–

**''धरम धुरीन धीर नय नागर। सत्य सनेह सील सुख सागर।**
**देसु कालु लखि समउ समाजू। नीति प्रीति पालक रघुराजू।।''**[१]

'नयति इति नीतिः', 'नीयते पुरुषार्थफलाय सर्वं जगद् यया सा नीतिः' वा। अर्थात् या विद्या स्वयुक्तिभिः सर्वलोकस्य सर्वेषां जनानाञ्च धर्मार्थकाममोक्षचतुर्वर्गफलप्राप्त्यर्थं सन्मार्गं प्रति प्रेरयति नयति वा तस्या विद्याया नाम नीतिः। देवगुरुणा बृहस्पतिना उक्तम्–'नीतेः फलं धर्मार्थकामावाप्तिः।[२] अर्थात् धर्मार्थकाममोक्षत्रिवर्गसिद्धे सति चतुर्थपुरुषार्थमोक्षस्य संसिद्धिर्भवत्येव। शुक्रनीतौ शुक्राचार्येण सन्दर्भेऽस्मिन् उक्तम्–

**''सर्वोपजीवकं लोकस्थितिकृन्नीतिशास्त्रकम्।**
**धर्मार्थकाममूलं हि स्मृतं मोक्षप्रदं यतः।।**[३]

अस्यायम् आशयो विद्यते इदं यद् नीतिशास्त्रं सर्वेषां जीविकाया भवति साधनम्। नीतिशास्त्रं लोकसंरक्षकं चतुर्वर्गफलप्रदायकञ्चास्ति। आधुनिककाले राजनीतौ धर्मस्यावश्यतामाश्रित्य बहुशो राजनितिज्ञा विवदन्ति। परं जयप्राप्त्यर्थं प्रत्यपादि तत्र भगवता व्यासेन–'यतो धर्मस्ततो जयः।' इति एतद्विषये धर्मसम्राजः स्वामिकरपात्रिमहाभागा विषयप्रतिपादने प्रोच्यमाना आसन् - अभ्युदयस्य धारणं यतो भवति स धर्मः, यतश्च अभ्युदयस्य प्राप्तिर्भवति सा नितिरिति।' वस्तुवस्तु राजनीतौ धर्मनिरपेक्षतां ये

१. रामचरितमानसे अयोध्याकण्डे ३०७.५-६
२. बार्हस्पत्यार्थशास्त्रे २.४३
३. शुक्रनीतौ १.५

प्रतिपादयन्ति न ते नीतेर्मर्मज्ञाः। नीत्या एव शास्त्राणि[१] धर्मञ्च प्रतिष्ठन्ते तद्विना च शास्त्राणि धर्मश्च नश्यन्ति भगवता तदुक्तं नीतिसम्बन्धे–'नश्येत् त्रयी दण्डनीतौ हतायाम्' इति। रामो विग्रहरूपेण धर्मरूपः। रामस्य राजनीतिरद्यापि तिरोहिता नास्ति। रामस्य समग्रक्रिया रामराज्ये धर्मनीतिपुरस्सराः प्रवर्तन्तेस्म। तदुक्तं वाल्मीकीयरामायणे–'रामो विग्रहवान् धर्मः।'

लोकतन्त्रे धर्मनिरपेक्षराजनीतेर्नावश्यकता अपितु धर्मसापेक्षराजनीतिरेव। यतः 'राजनीतिर्महालक्ष्मीः धर्मो नारायणः स्वयम्' इति अस्माकम् आस्था। एतेनैव पशुपक्षिसहिताः समग्रजीवा जीवत्वेन धर्मपुरस्सरं नीत्या रक्षणीया भवन्ति। अतो रावणस्याधर्ममयी आसुरी राजनीतिः पराजिता भवति, रामस्य धर्ममयी दैवी राजनीतिश्च विजयिनी भवति। अतएवोक्तम्–

**''रामादिवद्वर्तितव्यं न क्वचिद्रावणादिवत्।**
**इत्येष मुक्तिधर्मादिपाराणं नय इष्यते।।''**[२]

अस्मैव धर्मनीतेर्लोकप्रवर्तनमाश्रित्य श्रीमद्भगवद्गीतायां प्रोक्तम्–

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।**
**अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्।।**

**परित्राणाय साधूनां विनाशाय च दुष्कृताम्।**
**धर्मसंस्थापनार्थाय सम्भवामि युगे युगे।।**[३] इति।

अद्यत्वे समग्रजीवने सर्वपक्षेषु राजनीतेः प्रवर्तनं दरीदृश्यते। तं विना क्वापि जीवनमसम्भवमेव। अतो रजनीतेर्ज्ञानस्यानुभवरूपस्य सर्वत्रमावश्यकत्वमिति।[४]

महाभारते धर्मनीतेश्चत्वारः पादाः सत्य-तपो-दया-पवित्रतासमाख्याताः। एतेषु सत्यं सर्वतो वैशिष्ट्यं बिभर्ति। एतद्विषये सत्यदेवनाम्नो राज्ञो विषये कथैका दृश्यते। तत्र कथायां निर्दिष्टं यदेकस्मिन् दिवसे यदा राजा स्वशय्यात उत्थितस्तदा एकां सुन्दरीं स्त्रीं राजप्रासादाद्बहिर्निर्गच्छन्तीं दृष्टवान् तथा

---

१. नयविक्रमसम्पन्नः सूत्थानश्चिन्तयेच्छ्रियम्।
नयविनयो मूलं विनयः शास्त्रनिश्चयः।।
विनयो हीन्द्रियजयस्तद्युक्तः शास्त्रमृच्छति
तन्निष्ठस्य हि शास्त्रार्थाः प्रसीदन्ति ततः श्रियः।।
(कामन्दकीयनीतिसारः १.२१-२२)

२. उज्ज्वलनीलमणिः हरिवल्ल्भाप्रकरणम् २४

३. श्रीमद्भगवद्गीता ४.७-८

४. सर्वलोकव्यवहारस्थितिनीत्या विना न हि।
यथाशनैर्विनादेहस्थितिर्न स्याद्धि देहिनाम्।। शुक्रनीतिः १.११

तां विलोक्य साश्चार्यं राज्ञा तया पृष्टम्–भवती केति? सा आह–मम नाम लक्ष्मीः इति। राजा ससुखं तां गन्तुमादिदेश। एवं गतायां लक्ष्म्यां पुनरेकं पुरुषं बहिर्गच्छन्तं दृष्ट्वा राजा तं प्रत्याह–भवान् कः? पुरुष उत्तरं ददाति मम नाम दानमिति। लक्ष्म्या विना दानशक्तित्वं भवतो लुप्तं भविष्यति। अतो गच्छाम्यहम्। राजा तमपि गन्तुमादिदेश। एवमेव तृतीयः सदाचारः चतुर्थश्च यश अपि पुरुषरूपेण निर्गच्छन्तौ राजा तमपि नावरूरोध। पुनश्च पञ्चम एकः पुरुषो निर्गतः। पुनः राजा तं निरीक्ष्य पृष्टवान्– भवान् कोऽसि? तेनोक्तम् सत्यमहम्। एतच्छ्रुत्वा राजा विनयपूर्वकं करौ संयोज्य प्रार्थितवान्– हे सत्य मया भवतस्त्यागः कदापि न कृतः न क्रियते च, कथं भवता गम्यते? अहं भवन्तं गन्तुमादिष्टुं न शक्नोमि, भवति गते मम सर्वस्वं गमिष्यतीति। अतः सत्यं राजप्रसादे अवर्तत। पुनः सत्याश्रिता लक्ष्मीः, दानं, सदाचारो, यशश्च च सर्वे प्रत्यावर्तन्त। एवमेतत् कथामाध्यमेन महाभारते सत्यस्य राजनीतौ परमावश्यकत्वमिति निर्दिष्टं भगवता व्यासेन।

ननु अर्थशास्त्रस्य स्वरूपं किमिति चिन्तने सम्पूर्णस्य भारतवर्षस्य विश्वस्य च अर्थसमृद्धिसंस्थापनाय[१] नीतिपुरुष आराधनीयो भवति। स च नीतिपुरुषः कीदृशः, किंरूपः, कीदृक् क्रियावान्निति जिज्ञासाशमनाय शास्त्रे उक्तम्–

**अर्थशास्त्रं भवेद् गौरं सारिकावदनं शुभम्।**
**अक्षसूत्रं फलं बिभ्रदन्नाहारं कमण्डलुम्।।** इति।

भावोऽयं चतुर्भुजरूपधारिणो भगवद्विग्रहस्वरूपस्यार्थशास्त्रपुरुषस्य वर्णो गौरो मुखञ्च सारिकायाः (मैना) मंगलकारि भवति। स च एकस्मिन् करे चतुवर्गपुरुषार्थरूपं चतुर्फलं तथा अन्यस्मिन् करे अक्षमालां धारयति, तृतीयकरे च भक्ष्यभोज्यसामग्रीयुतं पात्रम्, चतुर्थकरे च कमण्डलुम्। एतादृश अर्थशास्त्राधिष्ठाता पुरुषो नितान्तं कमनीयः सर्वेष्टसाधको भवति। सत्यं, तपः, दया, पवित्रता चैतानि धर्मनीतेश्चतुरंगानि। एतानि च यत्र राज्ये प्रवर्तन्ते तत्र नूनं सुखमेव। अतः राज्ञा अर्थोपार्जनाय पापचरणेनार्थप्राप्तिर्गर्हिता। एवं नीत्या समागतधनस्य धर्मबुद्ध्या यो हि उपयोगः[२], स अमृतरूपः। यदि च पापबुद्धया अर्थसमृद्धिः क्रियते स विषतुल्या एव। एवं समष्टिहिताय राजनीतिप्रवर्तकराज्ञः साहाय्यं पशुपक्षिणोऽपि आचरन्ति। अन्यायिनं राजानं भ्राता अपि परित्यजति। यदि राज्ञः सभासदः धर्मज्ञाः सन्तो राजानं बोधयन्ति तदा तद्राज्ये सुखशान्तिः प्रसरति। तदुक्तं याज्ञवल्क्यस्मृतौ–

---

१. पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि,
प्रयशः तानि संहृत्यैकमिदमर्थशास्त्रं कृतम्।। कौटिल्यार्थशास्त्रम् १.१

२. न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा।
सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम्।। कामन्दकीयनीतिसारः १.२०

**श्रुताध्ययनसम्पन्ना धर्मज्ञाः सत्यवादिनः।**
**राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः।।**[1]

यत्र राज्ये अपूज्याः पूज्यन्ते, पूज्यानाञ्चनादरो भवति, तत्र राज्ये तापः दुर्भिक्षः मरणं भयमिति त्रीणी प्रवर्तन्ते। अतः शास्त्रे युक्तमुक्तम्–

**अपूज्या यत्र पूज्यन्ते पूज्यानां च विपर्ययः।**
**त्रीणि च भविष्यन्ति दुर्भिक्षं मरणं भयम्।।**

मनुस्मृतावपि एतदनुकूलमेव वचनं प्राप्यते। यथा–

**अदण्डयान् दण्डयन् राजा दण्डयांश्चैवाप्यदण्डयन्।**
**अयशो महादाप्नोति नरकं चैव गच्छति।।**[2]

एवं भारतीया राजनीतिः समग्रपूर्णतामेति। भारतीयराजनीतेः पाश्चात्यराजनीत्या सह तोलने सति स्पष्टमिदं विभाति यत् पाश्चात्यनीतिज्ञानां विचारसरणेरपेक्षया भारतीयनीतेः विचारसरणिः सर्वतः गरीयसी परिपूर्णा च। यतो हि सुखावाप्तये राजनीतावपि धर्माचरणमावश्यकम्। अतः भारतीयनीतिव्यवस्था नूनं परिपूर्णा सर्वसुखावहा च। पाश्चात्यानां नीतौ धर्मस्य स्थानं न दृश्यते। धर्मेण खलु नीतौ असामञ्जस्यं भवतीति विचारशिलाः पाश्चात्यराजनीतिज्ञाः पूर्णतां प्रति गन्तुं नेहन्ते। भारतीया दृष्टया तु धर्मशीला राजानः प्रजापालने क्षमा भवन्ति। उक्तमेव–'धनाद्धर्म स्ततः सुखम्' इति। गभीरे विचारे कृते प्राच्यपाश्चात्यराजनीतिविषयकगुणदोषसमीक्षणे सति इदमेव प्रतिफलति उभयोर्नीत्योर्यदसामञ्जस्यं तद् धर्मसापेक्षधर्मनिरपेक्षतादृष्टया। अतः धर्मसापेक्षभारतीयप्राचीनराजनीतिरेव पूर्णतां प्राप्नोति। पाश्चात्यनीतौ सम्प्रति अर्थप्राधान्यं दरीदृश्यते धर्मानुशासनं विना अर्थः सार्थक्यं न भजते। महाभारते धर्मराजयुधिष्ठिरस्य शासने धर्मप्रभावेण येन पथा युधिष्ठिरो गच्छतिस्म तन्मार्गे शुष्का मृता अपि वृक्ष-वनस्पतयो जीविताः पल्लवपुष्पादिभिर्मण्डिता भवन्तिस्म। तदुक्तम्–

**शुष्कोऽपि द्रुमायते यत्र राजा युधिष्ठिर इति।**

महाकविना कालिदासेनापि रघुवंशमहाकाव्ये धर्मज्ञेन राज्ञा रघुना पुत्रप्राप्तेरिच्छया गुरोर्वशिष्ठाश्रमे गते सति तत्र सिद्धवने दावानलो व्याप्त आसीत्। समाधौ निमग्नो गुरुः दावानलं स्वयमेव शान्तो जातः। फलपुष्पैः वृक्षाः सम्पन्नाः। शीतलमन्दसुगन्धसमीरणश्च प्रवहमान आसीत्। यथा–शशामवृष्ट्यापि विना दावाग्निः, आसीद् विशेषफलपुष्पवृद्धिः। अतः गीतायां स्वविभूतीनः अर्जुनाय प्रदर्शयन् भगवान् आह–**'नीतिरस्मि जिगीषताम्' इति।**

---

१. याज्ञवल्क्यस्मृतौ २.२

२. मनुस्मृतिः ८.१२८

इदं हि विश्वप्रशासनं प्रधानदेवेन श्रीविष्णुना स्वायत्तीकृतम्। अद्यापि शिवब्राह्मणावपि स्व-स्वकर्मणि रतौ तथापि श्रीविष्णुना पूर्णपुरुषत्वेन धर्मपुरूषत्वेन च चराचरं जगद् व्याप्तम्। अतः विश्वप्रशासनं विष्णोरधीनमेव। स च विष्णुः बृहत्वात् व्यापकत्वाच्च धर्ममूर्तिः सर्वं विश्वं प्रशास्ति। स च धर्मप्रधानः, धर्मप्रधानत्वेन श्री-लक्ष्म्योः च पतिः। तदुक्तञ्च वेदे-'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ'[१] इति। एतादृशस्य विश्वसम्राजः विष्णोः ह्री-लक्ष्मी इति द्वे पत्न्यौ आस्ताम्। अत इहलोकप्रशासने राज्ञः स्वरूपं धर्ममयमिति जनैरङ्गीक्रियते। यतोहि राज्ञि ह्रीः राजलक्ष्मीः च उभे वसतः। अतएव राज्ञो दर्शनं पुण्यजनकमित्यभिधीयते। तत्र धर्मः धर्ममयी राजनीतिश्च कारणम्। यदि राजनीतिः धर्ममयी न स्यात्तर्हि राजनीतेरसाफल्यात् तद्राज्यं विनष्टमेव भवति। रावणो यदा सद्राजा, महाबली, विश्वविजयी चाभवत्, धर्मप्रभावादेव स इतिहासे देवैरसुरैश्च अपाराजितोऽभूत् परं यदा तेन धर्मविरूद्धमशास्त्रीयमर्थशास्त्रविरूद्धञ्च नीतिप्रवर्तनमारब्धम्, तत एव तस्य पराजयगाथा प्रारब्धा। वाल्मीकिरामायणस्य सुन्दरकाण्डे सीताऽऽन्वेषणाय गतेन वायुपुत्रेण हनुमता मेघनादब्रह्मपाशं स्वीकृत्य रावणराज्यसभायां गतम्, बहुपश्नोत्तरमाध्यमेन रावणो प्रत्यभाषि-

**प्राप्तं धर्मफलं तावद् भवता नात्र संशयः।**
**फलमस्याप्यधर्मस्य क्षिप्रमेव प्रपत्स्यसे।।**[२]

अत्र प्रसङ्गेनेदं ज्ञापितं भवति यावद्धि रावणः शिवोपासनादिकं विधाय धर्ममयाचरणप्रधानो राजा अभवत् तावद्धि स विश्वविजयी अपराजेयश्चासीत्, परं यावतस्तेनाधर्ममयमाचरणं प्रारब्धम्, तत एव तस्य पराजयगाथा समारब्धा इति हनुमत्परामर्शकारणम्।[३] एतदेवोच्यते आचर्यमम्मटेन-'रामवद्वर्तितव्यं न रावणवदिति।' एतत् कथनेऽपि एतदेवाशयो यद् रामो धर्ममयः 'रामो विग्रहवान् धर्मः' इति वाल्मीकिवचनात्। अतः रामेण इदं लोकप्रशासनं मानवरूपेण एकादशसहस्त्रैकादशोत्तरैकशतवर्षं (११११११) यावद्राज्यं पालितम्। तत एवोच्यते राजा राम इति। आधुनिका अपि राजनेतारः अद्यापि रामराज्यं नेतुं बहुधाः प्रतिज्ञायन्ते। स्वतन्त्रभारतस्य स्वप्नदृष्टा महामागान्धिमहोदयोऽपि रामराज्यं नेतुं कामयतेस्म। रामराज्यपरिषदि धर्मसम्राजः स्वामिकरपात्रचरणा अपि रामराज्यं तन्नीतिश्च प्रवर्तयितुं यतमाना आसन्।

दृश्यतां नाम रामस्य राजनीतिः। दुर्धर्षेण रावणेन सीताया अपहरणकारणेनैतिहासिकं रामरावणयोर्युद्धं जातम्। महति हि सङ्ग्रामे बहुषो धनजनबलस्य क्षयोऽजायत। यथा महाभारते दृश्यते, रामरावणयोः

१. कृष्णयजुर्वेदीयपुरुषसूक्ते
२. वाल्मीकिरामायणे सुन्दरकाण्डे ५१.२९
३. ननु यदि धर्मः अधर्मनाशनः तर्हि प्राथमिक एव धर्मः आधुनिकानधर्मान्निवर्तयेदित्याशंकयाह-प्राप्तमिति। तावच्छब्दः कात्स्र्न्यवाची। कृत्स्नं धर्मफलं, फलमस्येति। तथा च क्षिप्रं धर्माचर अन्यथा सद्यस्ते विनाशो भविष्यतीति भाव। अत्र कर्तव्यत्वेन विधायमानो धर्मः सीताप्रदानपूर्वकरामविषयकशरणागतिरेव। शूरस्याशौर्यप्रवृत्त्या धर्मफलं सर्वं क्षीणमिति हनुमतावगतमिति मन्तव्यम्।
वाल्मीकिरामयणे भूषणटीकायाम् ५१.२९

युद्धं महाभारतयुद्धादपि कठिनमभूत्। परं तस्मिन् सङ्ग्रामे भरतराज्यस्य एकोऽपि सैनिकः, एकोऽपि पणो न व्ययीभूतः। रामः महासमरसागरः पारं जगाम। तत्र युद्धे वानर–ऋक्ष–पशु–पक्षि–कोल–किराताभिल्लादयः प्राणपणेन सहायका अभूवन्। दृश्यतां नाम रामस्य राजनीतिर्यत्र महायुद्धे अयोध्या सर्वतो रक्षिता, सर्वे जनाः रामराज्यात् पूर्वमपि रामराज्यप्रवर्तनमाकलय्य सुखिनः शान्ताश्चासन्। परं सुरक्षितेऽपि लंकायां जनता उपद्रुता आश्रयहीना मृतकल्पा चासीत्। रामस्य धर्मप्रधानेन स्वभावेन मोहिताः स्निग्धा अपि वानरादयो कोल–भिल्लादयश्च अस्त्रशस्त्रप्रचालनज्ञानहीना अपि प्राणपणेन युद्धमकार्षुः। रामो विजयी अभवत्। तत्र समीक्षणीयेयं राजनीतिर्यद् मर्यादापुरुषोत्तमेन रामेण या धर्मनीतिर्जगतः पालनाय समाश्रिता, तया शासितं राज्यं रामराज्यमिति नाम्ना प्रख्यातम्। तदेव रामराज्यं कामयतेस्म महत्मगान्धी अद्यापि कामयते अखिलभारतभूमण्डलम्। तत्सर्वं सुधीभिरुह्यम्। अयमेवाशयो ''**नीतिरस्मि जिगीषताम्**'' इति भगवदुक्तेः। इति शम्।

# उपनिषत्सु जीवनदर्शनम्

डॉ० देवन्द्रप्रसादमिश्रः

षड्भावविकार[1] मापन्नेऽस्मिन् जगति मानुषजन्मजुषां जनानां पुरुषार्थसाधनमेव परमं लक्ष्यम्। पुरुषार्थश्च धर्मार्थकाममोक्षरूपश्चतुर्विधः। ब्रह्मणः सृष्टौ मनुष्यः सर्वोत्कृष्टजीवोऽस्ति[2] तच्चेत्थं प्रतिपाद्यते–

**सृष्ट्वा पुराणि विविधान्यज आत्मशक्त्या**
**वृक्षान् सरीसृपपशून् खगदंशमत्स्यान्।**
**तैस्तैरतुष्टहृदयः पुरुषं विधाय**
**ब्रह्मावलोकधिषणं मुदमाप देवः।।**[3]

यतो मनुष्यः सर्वोत्कृष्टप्राणिरस्ति, अतस्तत्परकाण्येव शास्त्राणि[4]। शास्त्रप्रमाणमेव तस्य शरणम्। "यस्तु क्रियावान्[5] पुरुषः स विद्वानित्यभियुक्तोपदेशात्, शास्त्रज्ञानपेक्षया तदनुष्ठानस्य श्रेष्ठत्वात्।

---

१. जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति। (निरु. १.१.४)

२. भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः।
बुद्धिमत्सु नराः श्रेष्ठाः नरेषु ब्राह्मणाः स्मृताः।।
ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवेदिनः।। मनु. १.९६-९७

३. श्रीमद्भागवत- ११.९.२८

४. मतयो यत्र गछन्ति तत्र गच्छन्ति वानराः।
शास्त्राणि यत्र गच्छन्ति तत्र गच्छन्ति मानवाः।।
पितृदेवष्याणां वेदश्चक्षुः सनातनम्।
अशक्यञ्च प्रमेयञ्ज वेदशास्त्रमितिस्थितः।। मनु. १२.९४
यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्।।
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि।। गीता १.२३-२४

५. शास्त्राण्यधीत्यापि भवन्ति मूर्खाः यस्तु क्रियावान् पुरुषः स विद्वान्।
सुचिन्तितमौषधमातुराणां न नाममात्रेण करोत्यरोगम्।। (मित्रलाभ- २८)

तत्त्वज्ञानेन मोक्ष एव परमसाध्यत्वेन प्रथितोऽस्ति। आजन्मनो मोक्षपर्यन्तमनुष्ठीयमानस्य क्रियाव्यापारस्य नाम जीवनदर्शनम्। तद्विपरीतमशास्त्रीयऽऽचरणं जीवनाशायोपकल्पयते। विषयेऽस्मिन्नुपनिषत्सु यथाप्रमाणमुपलभ्यते तदत्र संगृह्य विवेचयामः।

चतुर्विधपुरुषार्थेषु धर्म[१] एव प्रथमत आगच्छति। धर्ममूलमेवान्ये पुरुषार्थाः। अतस्तमादौ विचारयामः। कोऽयं धर्मः? कस्मादुत्पद्यते? किमनेन साध्यते वेत्यादि बहवः प्रश्नाः पुरः समागच्छन्ति। यद्यपि विविधपृष्ठभूमिषु धर्मस्य परिभाषा भिन्नैव भवति, तथापि निःश्रेयससाधनाय अपूर्वत्वेन तस्य कल्पना क्रियते। अत एवोच्यते–

**आचारप्रभवो धर्मः धर्मस्य प्रभुरच्युत इति**[२]

आचारणादेवधर्म उत्पद्यते। तेन च निःश्रेयसलाभः। तस्मात्तल्लाभाय जन्मतः सत्कर्मणोऽभ्यासः क्रियते। सदाचारस्य परिपालनं, वेदाध्ययनं, गुरुशुश्रूषा, प्रजापरिपालनं, इष्टापूर्तिः इत्यादयो ये धर्माः

---

१. अजरामरवत् प्राज्ञः विद्यामर्थञ्ज चिन्तयेत्।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत्।। (मित्रलाभ-१)
नामुत्र हि सहायार्थं पितामाता च तिष्ठतः।
न पुत्र दारा न ज्ञातिर्धर्मस्तिष्ठति केवलः।।
एकः प्रजायते जन्तुरेक एव प्रलीयते।
एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम्।।
मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं क्षितौ।
विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति।।
तस्माद्धर्म सहायतार्थं नित्यं सञ्चिनुयाच्छनैः।
धर्मेण हि सहायेन तमस्तरति दुस्तरम्।।
धर्मप्रधानं पुरुषं तपसा हतकिल्बिषम्।
परलोकं जयत्याशु भास्वन्तं खशरीरिणम्।।
उत्तमैरुत्तमैर्नित्यं सम्बन्धानाचरेत्सह।
निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत्।।
दृढकारी मृदुर्दान्तः क्रूराचारैरसं वसन्।
अहिंस्रो दमदानाभ्यां जयेत्स्वर्ग तथाव्रतः।। मनु. ४.२३८-२४६
ऊर्ध्वबाहूविरौत्येष न हि कश्चिच्छुणोति मे।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते।। महाभारत
स्वल्पमत्यस्य धर्मस्य त्रायते महतो भयात्। गीता २.४०
२. विष्णु सहस्रनाम - १३७
त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचर्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मनमाचार्यकुलेऽवासादयन् सर्व एते पुण्यलोको भवन्ति ब्रह्मसंस्थेऽमृतत्वायेति।। छा. उ. २३ खण्डः

शास्त्रविहितास्त एव जीवनदर्शनत्वेनापतन्ति। तथा सतिपुरुषार्थचतुष्टयप्राप्त्यनुकूलव्यापारविशेष एवं जीवनदर्शनं सिद्ध्यति।

उपनिषन्नाम[१] उपब्रह्मणः समीपे निसादयति स्थापयति जीवमित्युपनिषत्। ब्रह्मविद्याप्रतिपादकं शास्त्रम्। तच्च पात्रविशेषे एव दीयते।[२]। उच्यते हि–

**यस्य देवे पराभक्तिर्यथादेवे तथा गुरौ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः।।[३]**

आश्रमादाश्रमं गच्छेदिति नियमानुसारं गुरुकुले वेदाध्ययनानन्तरं गुरुः शिष्यमनुशास्ति–

स्वाध्यायान्मा प्रमदः। आचार्याय प्रियधनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृ देवो भव। पितृ देवो भव। आचार्य देवो भव। अतिथि देवो भव। यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि। यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि। नो इतराणि। ये के चास्मच्छ्येयाँसो ब्राह्मणाः तेषां त्वयासनेन प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धया देयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। सम्बिदा देयम्। अथ यदि ते कर्म विचिकित्सा वृत्तिविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः सम्मर्शिनः युक्ता आयुक्ताः। आलूक्षा धर्मकामाः स्युः। यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः। अथाभ्याख्यातेषु। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्। एवमुचैर्तदुपास्यम्।

उपदेशप्रसङ्गेऽस्मिन् जीवने परिपालनीयाः बहवो धर्माः उपदिष्टाः। तस्य परमेश्वरस्य शास्त्रयोनित्वात्, तत एव तत्साक्षात्कारे पन्थाः निःसरति। गुरुवेदान्तवाक्येषु विश्वासः श्रद्धेति नियमात्–

**श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति।।[४]**

---

१. उप + निः सद्लृ धातु
२. इदं ते नातपस्काय नाभक्ताय कदाचन।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति।। गीता - ५.३९
३. श्वेतराश्वेतरोपनिषत् - ६.२३
४. गीता ५.३९

बृहदारण्यकोपनिषदि श्रेयप्रेयकर्मणोः विचारावसरे बहुभिः दृष्टान्तैः तथ्यं प्रतिपाद्यते। याज्ञवल्क्यस्य[1] द्वे भार्ये स्तः। मैत्रेयी कात्यायनी च। तत्र कात्यायनी सांसारिकज्ञानसम्पन्ना सांसारिकेष्वेव पदार्थेष्वभिरुचिं दधाति। मैत्रेयी तु ब्रह्मवादिनी आसीत्। याज्ञवल्क्यः प्रव्रजन् मैत्रेयीं कात्यायनीं च स्वार्जितसम्पत्तिं विभज्य दातुमैच्छत्। परन्तु ब्रह्मवादिनी तत्र कथयति– भौतिकसम्पदामहं किं करवाणि येनामृतत्वं न प्राप्नुयामेति।

सर्वाश्रमाणमाधारभूतत्वाद् गृहस्थाश्रमस्य महिमा जेगीयते[2]

**यथा वायु समाश्रित्य वर्तन्ते सर्वजन्तवः।**
**तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः।।**[3]

सन्तत्या शोभते गृहमिति शिष्टोपदेशाद् गृहस्थाश्रमः सन्तत्या नूनं भाव्यम्। तदर्थमुपनिषद्यपि विधिरवलोक्यते। बृहदारण्यकोपनिषदि श्रीमन्थपुत्रमन्थादि बहवः काम्यप्रयोगा अपि दृश्यन्ते यथा–

स यः कामयेत महत्प्राप्नुयामित्युदगयन आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहमुपसद्व्रती भूतवौदुम्बरे कांसे चमसे वा सर्वौषधं फलानीतिसम्भृत्य परिसमूह्यं परिलिप्याग्निमुपसमाधाय परिस्तीर्यावृत्ताज्यं संस्कृत्य पुंसानक्षत्रेण मन्थं संनीय जुहोत्युपक्रम्यतं हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति।।७।। एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाचापि य एनं शुष्केस्थाणौ निषिञ्चज्जायेरञ्छाखाः प्ररोहयेयुः पालाशानीति तमेतन्नापुत्राय नानन्तेवासिने वाब्रूयात्। (६.३.१२) इति श्रीमन्थप्रयोगः।

---

१. अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतु मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यदृतमुपाकरिष्यन्। मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरेऽयमस्मात् स्थानादस्मि हन्त तेऽनया कात्यायन्यान्तं करवाणीति। सा होवाच मैत्रेयी यन्नुम इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्यां न्वहं तेनामृताऽऽहो नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्त्वस्य तु नाशास्ति वित्तेनेति। सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेवभगवान्वेद तदेव मे ब्रूहीति।
सहोवाच याज्ञवल्क्यः प्रिया यै खलु नो भवती सती प्रियबृधद्धन्त तर्हि भवत्येतद् व्याख्यास्यामि ते व्याचक्षणस्य तु मे निदिध्यासस्वेति स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मस्तु कामाय जाया प्रिया भवति न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्युपक्रम्य न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनुस्तु कामाय लोकाः प्रिया भवन्ति न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यायनस्तु कामाय सर्वं प्रियं भवति। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते श्रते मते विज्ञान इदं सर्त्त सर्वं विदितम्।

२. सानन्दं सदनं सुताश्च सुधयः कान्तामनो हारिणी
सन्मित्रं सुधनं स्वयोषितिरतिश्चाज्ञापराः सेवकाः।
आतिथ्यं शिवपूजनं प्रतिदिनं मिण्टान्नपानं गृहे
साधोः सङ्गमुपासते हि सततं धन्यो गृहस्थाश्रमः।। सु. र. भा. गा.

३. मनु. ३.७७

**अथ पुत्रमन्थप्रयोगः**

अथ स य इच्छेत पुत्रो मे शुक्लः (पिङ्गलः, श्यामो वा) जायेत इत्युपक्रम्य कामनाभेदेन हविषो विधानं विधीयते। अथ दुहितेच्छायां-अथ य इच्छेत् दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै। गर्भाधानं करिष्यन् तत्प्रयोगविधिः प्रतिपाद्यते–

अथैनामभिपद्यते ऽमोऽहमस्मि सा त्वं सा त्वमस्थमोऽहं सामाहमस्मि ऋक्त्वं द्यौरेहं पृथिवीत्वं तावेहि संरभवहै सह रेतो दधावाहै पुंसे पुत्राय वित्तय इति।।२०।। अथास्य ऊरू विहापयति विजिहीथां द्यावापृथिवी इति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धाय त्रिरेनामनुलोमामनुमर्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टारूपाणि पिंशतु। आसिञ्चतु प्रजापतिधीता गर्भं दधातु ते। गर्भं धेहि सिनीवालिगर्भं धेहि पृथुष्टके। गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ।।२१।। हिरण्मयी अरणी याभ्यां निर्मथ्यतामश्विनौ। तन्ते गर्भं हवामहे दशमे मासि सूतवे। यथाग्निगर्भापृथिवी यथा द्यौरिन्द्रेण गर्भिणी। वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति।।२२।। (६.५.१३-२२)

अथाकामतः कुत्र चिद्रेतः स्खलने मनुस्मृतौ[१] प्रायश्चित्तं विधीयते। तस्य मूलं बृहदारण्यकोपनिषदि लभ्यते। सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति।।४।। तदभिृशेदनु वा मन्त्रयते-यन्मेऽद्यरेताः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्यदप, इद महं तद्रेत आददे पुनर्मामैत्विमन्द्रियं पुनस्तेजः पुनर्भगः, पुनरग्निर्धिष्णया यथास्थानं कल्पतामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ व भ्रुवौ वा निमृज्यात्[२] उदके आत्मनः प्रतिबिम्बं नावलोकयेदित्यपस्ति धर्मशास्त्रेषु निषेधः। तत्करणे जनः प्राश्चित्तीयते। तत्स्वरूपञ्चात्र चिन्यते–

अथ यद्युदक आत्मनं पश्येदभिमन्त्रयेत्-मयि तेज इन्द्रियं यशो द्रविणं सुकृतमिति श्रीर्ह वा एषां स्त्रीणां यन्मलोद्वासास्तस्यान्मलोद्वाससं यास्विनीमभिक्रिम्योपमन्त्रयेत्[३]।

एवं धर्मार्थकामाः यथोपनिषत्सु विवेचिताः। अथ मोक्षचर्चा विधीयते। कर्मकाण्डेन विधूतकल्मषः ज्ञानकाण्डेऽधिकार[४] इति शास्त्रमासारो वर्तते। पाञ्चभौतिकशरीरस्योपचारः पाञ्चभौतिकतत्त्वैरेवानुष्ठीयते। अन्नप्राणादीनां चर्चा उपनिषत्सु बहुत्र वर्तते। यत्पिण्डे तद् ब्रह्माण्ड इति कृत्वा पिण्डब्रह्माण्डयोरैक्यं

---

१. स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः।
स्नात्वाऽर्कमर्चयित्वा त्रि पुनर्मामित्यृचं जपेत्।। मनु. २.१८१

२. बृ. र. पनि. ६.४.५

३. बृ. र. उप. ६.४.६

४. अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽधिगताखिलवेदार्थेऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्ज पुरः सरं नित्यनैमित्तिकप्रायश्चित्तेनोपासनानुष्ठानेन निर्गतनियखलकल्मषतया नितान्तनिर्मलस्वान्तः साधनचतुष्ट्यसम्पन्नः प्रमाता। (वेदान्तसार, अनुबन्धचतुष्टयनिरूपणम्)

चिन्त्यते तत्त्वविद्भिः। जीवस्य गर्भवासावसरे पीडामनुभवन् ततो निर्गमनान्तरं भगवतः स्मरणमेव सदा करिष्यामीति भगवन्तं स्तौति–

**पूर्वयोनिसहस्राणि दृष्ट्वा चैव ततो मया।**
**आहारा विविधा भुक्ताः पीता नाना विधाः स्तनाः ।।**

**जातश्चैव मृतश्चैव जन्म चैव पुनः पुनः।**
**मन्मया परिजनस्यार्थे कृतं कर्मशुभाशुभम्।।**

**एकाकी तेन दहेऽहं गतास्ते फलभोगिनः।**
**अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम्।।**

**यदि योन्याः प्रमुच्योऽहं तत्प्रपद्ये महेश्वरम्।।**
**ध्याये बह्मसनातनम्।।**[१]

जीवस्य शरीराधिष्ठानम्। शरीरे चेन्द्रियाणि संविशन्ति। तेषां निग्रहेणैव ज्ञानोदय इति प्रतिपाद्यते–

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।**
**योगिनः कर्म कुर्वन्ति सङ्गंत्यक्त्वात्मशुद्धये।।**[२]

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः।।**[३]

गृहस्थाश्रमे स्थितः मनुष्यः सर्वमात्मीयं सामाजिकमुत्तरदायित्वं परिसमाप्य तत आत्मनः सद्गतिं चिन्तयेत्। तदैव सन्यासस्य क्रमः प्रारभ्यते। तत्रोच्यते–

**वमनाहारवद् यस्य भाति सर्वेषणादिषु**
**तस्याधिकारः संन्यासे व्यक्तदेहाभिमानिनः।**
**यथा मनसि वैराग्यं जातं सर्वेषु वस्तुषु**
**तदैव संन्यसेद्विद्वानन्यथा पतितो भवेत्।।**

**उत्तमा तत्त्वचिन्तैव मध्यमं शास्त्रचिन्तनम्।**
**अधमा मन्त्रचिन्ता च तीर्थभ्रान्त्याधमाधमा।।**[४]

---

१. गर्भोपनिषद्
२. गीता – ५.११
३. गीता – ३.४२
४. मैत्रेय्युपनिषद् – २.१८-२१

संसारे बहुत्रैवं विधाः मनुषाः सन्ति ये खलु मङ्गलाचारयुक्तानां मनुष्याणां त्रिपुण्ड्रादिकं दृष्ट्वा तान् विहसन्ति। तत्र तेषां कल्मष एव कारणमिति द्योतयत्युपनिषद्–

**येषां कोपो भवेद् ब्रह्मन् ललाटे भस्मदर्शनात्**
**तेष मुत्पत्तिसाङ्कर्यमनुमयं विपश्चिता।**
**येषां नास्ति मुने श्रद्धा श्रौते स्मार्ते च भस्मनि**
**गर्भाधानादिसंस्कारास्तेषां नास्तीति निश्चयः।।**[१]

पृथिव्यां दृश्यमानानां नियमानां यो नियन्ता, यस्यानुग्रहेण जीवति जीवलोकः, यः विश्वमिदं विचष्टे, यस्य विसृष्टिः चराचरः। तादृशपरमेश्वरस्यानुकम्पां ज्ञानिनः प्रत्यहं कामयन्ते। उक्तञ्च गीतायाम्–

**अहं सर्वस्य प्रभवो मत्तः सर्व प्रवर्तते**
**इति मत्वा भजन्ते मां बुधा भाव समन्विताः।**
**मच्चित्ता मद्गतप्राणाबोधयन्तः परस्परम्**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च।।**[२]

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते।।**

**तेषामेवानुकम्पार्थमहमज्ञनजं मतः।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता।।**[३]

भगवत्पदप्राप्तये शास्त्रेषु बहवो मार्गाः समुपदिष्टाः सन्ति। यथा-नद्यां स्नानार्थं बहून्यवगाहनस्थानानि भवन्ति। ज्ञान-कर्म-भक्ति-योगादिपन्थाः एकमेव लक्ष्यं प्रापयन्ति। त इमे विधाः गीतायां सम्यग् विवेचिताः सन्ति। उच्यते हि गीतायाम्–

**यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।**
**एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति।।**[४]

**प्राणायामैर्दहेदोषान् धारणाभिश्च किल्विषम्।**
**प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान्गुणान्।।**

---

१. बृज्जावा. प. – ५.११-१२
२. गीता – १०.८-९
३. गीता – १०.०.१०-११
४. गीता – ५.५

**किल्विषं हि क्षयं नीत्वा रुचिरं चैव चिन्तयेत्।।**[1]

अनन्यभावचेतसा भगवतः संस्मरणेनापि मुक्तिं लभते मनुष्यः। अत एव गीतायां भगवतोच्यते–

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः।।**[2]

शास्त्रोपदिष्टमार्गानुसरणं कुर्वन् यदा मनुष्यः मुक्तिं लभते, तदानीं तस्य स्थितिः यादृशी भवति तदत्र प्रस्तूयते–

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व संशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।।**[3]

एवमाजन्मतो मोक्षपर्यन्तमुपनिषत्सूपदिष्टानां जीवनदर्शनानां प्रतिपादनं यथामति संगृह्यात्र प्रस्तुतमिति शम्।

---

१. अमृतनादेप, ८.९
२. गीता – १८.६६
३. मुण्डको. – २.८

# सांख्यदर्शने पञ्चविंशतितत्त्वविमर्शः

**डॉ. हरेरामत्रिपाठी**

सांख्यदर्शनस्य प्रमुखः सिद्धान्तः सत्कार्यवादः वा परिणामवादो विद्यते। इमं सिद्धान्तमाश्रित्यैव पञ्चविंशतितत्त्वानां निरूपणं भवति। सत्कार्यवादस्य प्रतिपादने पूर्वपक्षरूपेण आरम्भवादस्य, विवर्तवादस्य अभाववादस्य च प्रतिपादनं सांख्यदर्शने दरीदृश्यते। अत एव सांख्यतत्त्वकौमुदीकारैः निगद्यते 'कार्यात् [१]कारणमात्रं गम्यते। सन्ति चात्रवादिनः विप्रतिपत्तयः।' 'असतः सज्जायते[२]' 'एकस्य सतो विवर्तः कार्यजातं[३] न वस्तु सत्' 'सतोऽसज्जायते[४]' 'सतः सज्जायते[५]' इति वृद्धाः।

'असतः सज्जायते' अर्थात् असतः कारणात् सतः कार्यस्योत्पत्तिर्भवति इति बौद्धाः वदन्ति। अभावात् भावो जायत इति। विनष्टादेव बीजादङ्कुर उत्पद्यते यथा नष्टादेव दुग्धाद् दधि, ध्वंसादेव च मृत्पिण्डाद् घटश्चोत्पद्यते। बौद्धाः अत्रानुमानस्याकारः इत्थं वदन्ति। 'सर्वे कार्यरूपा[६] भावा अभावकारणकाः' कार्यत्वाद् बीजनाशोत्तरोत्पन्नाङ्कुरादिवत्। बौद्धमतस्यानुवादं पूर्वपक्षेण गौतमः ऋषिः करोति 'अभावाद्[७] भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् अर्थात् कार्यस्याव्यवहितपूर्ववर्ती कारणमेव भवति यथा अङ्कुरादिकार्यादव्यवहितपूर्ववर्ती बीजस्य ध्वंस एव सम्भवति न तु बीजादेरिति अभावस्य कारणत्वं सिद्धं भवति। अत्र श्रुतिरपि प्रमाणं विद्यते। 'एक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम् तस्मादसतः सज्जायते' इति श्रुतिः। अनया श्रुत्या उत्पत्तेः प्राक् सर्ववस्तुनामभाव एवासीत्। अतः अभावादेव भावोत्पत्तिरित्येवं समीचीनं प्रतिभाति इति बौद्धानां सिद्धान्तः।

अद्वितीयस्य त्रैकालिकबाधविधुरस्य ब्रह्मणः विवर्तः शुक्तेरिव रजतमतात्त्विकान्यथाप्रथात्मकं दृश्यमात्रं परमार्थत न सदिति। विवर्तस्य स्वरूपमस्ति 'अतात्त्विकोऽन्यथाभावः विवर्तः स उदीरितः[८]' इति। वा

१. सांख्यतत्त्वकौमुदी, पृ. २१९
२. सांख्यतत्त्वकौमुदी, पृ. २१९
३. वेदान्तदर्शनस्य सिद्धान्तः वर्तते।
४. सांख्यतत्त्वकौमुदी, पृ. २२३ अभाववादस्य मूलं बौद्धानां सिद्धान्तः।
५. सांख्यानां सिद्धान्तः सत्कार्यवादः, पृ. सं. २२३ सांख्यतत्त्वकौमुदी।
६. सांख्यतत्त्वकौमुदी, पृ. २२८
७. न्यायसूत्रम् अध्याय, ४ आ. १, सूत्र ४
८. सांख्यतत्त्वकौमुदी सारबोधिनी टीका, पृ. सं. २२०

वस्तुनः असमसत्ताको विवर्तः। अथवा कारणसलक्षणोऽन्यथाभावविलक्षणो विवर्तः[१] इति। अर्थादुपा–दानत्वाभिमतवस्तुसत्ताविषमसत्ताकत्वे सति तदवस्थाविशेषरूपम् विवर्तस्य लक्षणमिति। अत एव वेदान्ते कारणमेव कार्यस्वरूपेण भासते। अत एव कारणस्यैव सत्यत्वं भवति कार्यस्य सत्यत्वं न भवति। यथा शुक्तौ इदं रजतम् इति ज्ञाने जाते सति कालान्तरे तस्य यदधिष्ठानभूतस्य शुक्तेः ज्ञानानन्तरं पूर्वज्ञातं रजतं निवर्तते इति। तथा च एका कारणसत्तैव विविधकार्याकारेण भासिता भवति। घटशारावादयः परस्परं विभिन्ना अपि मृत्तिकातः नातिरिच्यन्ते। तथैव विविधस्वरूपः संसारः सद् ब्रह्मवस्तुतः नातिरिक्तः इति। एवञ्च सदः वस्तुतः एव रूपान्तरं संसारः इति।

न्यायवैशेषिकाः वदन्ति 'सतः असज्जायते[२]' अर्थात् भावरूपात् परमाण्वादेः पूर्वमविद्यमानं द्व्यणुकादिः जायते। घटः पूर्वमसदेव आसीत् परन्तु दण्डचक्रचीवरादिसामग्रीसमवहितात् मृदादिकारणाद् भिन्नं सदेवोत्पद्यते। एतेषां नये स्वोत्पत्तेः पूर्वं घटकार्यं नासीदिति। परन्तु समेषां तत्कारणसामग्रीणां समवधाने सति तज्जायते। कार्यकारणयोः भिन्नत्वमत्र विवक्षितं विद्यते। द्व्यणुकादेः उत्पद्यमानत्वादनित्याद् असदिति सिद्धम्। परमाणवः त्रिषु कालेषु विद्यन्ते अतः तस्य नित्यत्वात् सदिति । तथा च सतः परमाणुतः कारणात् असद्द्व्यणुकादयः जायन्ते इति न्यायवैशेषिकाः वदन्ति।

'सतः सज्जायते[३]' सतः कारणात् सतः कार्यस्योत्पत्तिर्भवति इति वृद्धाः इत्यनेन श्रेष्ठत्वमथ च श्रद्धा द्योत्यते। 'सतः सज्जायते' इति परिणामवादस्योपलक्षकमिति। तथाच भारतीयदर्शनेषु चत्वारः वादाः प्रसिद्धाः सन्ति। अभावकारणवादः, विवर्तवादः, आरम्भवादश्चेति त्रयः वादाः अत्र पूर्वपक्षरूपेण प्रतिपादिताः सन्ति। परिणामवादोऽत्र सिद्धान्तपक्ष इति। पूर्वपक्षिणां मतं खण्डयनाह सांख्यसूत्रकारः 'नासदुत्पादो नृशृङ्गवत्[४] नृशृङ्गस्य अपरिसिद्धत्वात् तस्यासदेव स्वभावो विद्यते। आकाशस्य विद्यमानत्वात् तस्य सदेक स्वभावोऽस्ति। अतः असतः उत्पत्तिर्न सम्भवति नृशृङ्गवत्तथाच कारणव्यापारात्प्रागपि कार्यं सत् असदकरणादिति नृशृङ्गवत्। एवं चत्वारि अन्यान्यपि सत्कार्यवादस्य साधकानि सूत्राणि सन्ति। 'उपादाननियमात्[५]' 'सर्वत्र सर्वदा सर्वासम्भवात्[६]' 'शक्तस्य शक्यकरणात्[७]' 'कारणभावाच्च[८]' एतानि सूत्राण्याश्रित्य ईश्वरकृष्णैरुच्यते—

१. सिद्धान्तलेशसंग्रहः, पृ. सं. ५४
२. सांख्यतत्वकौमुदी, पृ. सं. २२३
३. सत्कार्यवादस्य स्थापनम् सांख्यमतम्।
४. सांख्यसूत्रवृत्तिः प्रथमोऽध्याय, सं. ११४, पृ. ६९
५. सांख्यसूत्रवृत्तिः प्रथमोऽध्याय, सं. ११५, पृ. ७०
६. सांख्यसूत्रवृत्तिः प्रथमोऽध्याय, सं. ११६, पृ. ७१
७. सांख्यसूत्रवृत्तिः प्रथमोऽध्याय, सं. ११७, पृ. ७१
८. सांख्यसूत्रवृत्तिः प्रथमोऽध्याय, सं. ११८, पृ. ७१

**असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्।।[१]**

यद्यपि बीजस्य ध्वंसानन्तरमेवाङ्कुरस्योत्पत्तिर्भवतीति दृश्यते तथापि ध्वंसरूपस्याभावस्य कारणत्वं न स्वीक्रियते अपितु बीजस्यावयवानामेव कारणत्वं स्वीकार्यमेव यदि अभावात् भावोत्पत्तिर्सम्भवति तदा अभावस्य सर्वत्र सत्त्वात् सर्वत्र सर्वेषां कार्याणाम् उत्पत्तिर्स्यादिति। अतः कार्यं सत् असदकरणात् इति। इदमनुमानं समर्थयनाह वाचस्पतिमिश्रः असच्चेत् कारणव्यापारात्पूर्वं कार्यं नास्य सत्त्वं कर्तुं केनापि शक्यं, नहि नीलं शिल्पिसहस्रेणापि पीतं कर्तुं शक्यते[२]।

कारणव्यापारात्प्रागपि कार्यं सदुपादानग्रहणात्। कारणव्यापारात्प्रागपि कार्यं सत् सर्वसम्भवाभावात्। कारणव्यापारात्प्रागपि कार्यं सत् शक्तस्य शक्यकरणाच्चेति हेतुभिः सत्कार्यवादस्य सिद्धिर्भवति। अत्र शक्तस्य शक्यकरणादित्यत्र सांख्यवादिभिरुच्यते यत् यस्य कार्यस्योत्पादिका शक्तिः यस्मिन् कार्ये विद्यते तेन कारणेन तस्य कार्यस्योत्पत्तिर्भवति। यथा दध्युत्पादिका शक्तिः दुग्धे विद्यते अतः दुग्धेनैव दधिवस्तुनः उत्पत्तिर्भवति। पञ्चमो हेतु कारणभावो विद्यते। अस्यार्थो भवति कार्यं कारणस्वरूपमेव भवति। यदि कारणादभिन्नं कार्यं, कारणञ्च सदस्ति तर्हि तदभिन्नं कार्यमसद् कथं स्यात् इति अतः कारणव्यापारात्प्रागपि कार्यं सत् कारणभावादिति। कार्यकारणयोः मध्ये तादात्म्यसम्बन्धो विद्यत इत्यत्र साधकानि प्रमाणानि प्रतिपादयन्ति वाचस्पतिमिश्राः 'न[३] पटः तन्तुभ्यो भिद्यते तद्धर्मत्वाद् इह यद् यतो भिद्यते तत् तस्य धर्मो न भवति यथा गौरश्वस्य धर्मश्च पटस्तन्तूनां तस्मान्नार्थान्तरम्'।

'उपादानोपादेयभावाच्च नार्थान्तरत्वं तन्तुपटयोः[४]' 'नार्थान्तरत्वं तन्तुपटयोः संयोगाप्राप्त्यभावाद्[५]' 'पटस्तन्तुभ्यो न भिद्यते गुरुत्वान्तरकार्याग्रहणात्[६] उक्तानुमानेन कार्यकारणयोर्मध्ये तादात्म्यसम्बन्धस्य सिद्धिर्जायते। ततः सत्कार्यवादस्य सिद्धिर्जायते। सांख्यदर्शने जडचेतनभेदेन तत्त्वं द्विविधं भवति तत्र चेतनः पुरुषः स च प्रतिशरीरभेदेन भिन्नो विद्यते। जडस्वरूपा प्रकृतिरेव तस्याः विकृतयः व्यक्तपदवाच्याः भवन्ति। मूलप्रकृतिस्तु अव्यक्तमेव। व्यक्तन्तु त्रयोविंशतिविधम्। तेषां साधर्म्यन्तु हेतुमत्त्वम् अनित्यत्वम्, अव्यापित्वम्,

---

१. सांख्यतत्त्वकौमुदी, पृ. सं. १०३ (विद्वत्तोषिणी टीका सहित)
२. सांख्यतत्त्वकौमुदी, पृ. सं. १०५
३. सांख्यतत्त्वकौमुदी, पृ. सं. ११०
४. सांख्यतत्त्वकौमुदी, पृ. सं. १११
५. सांख्यतत्त्वकौमुदी, पृ. सं. १११
६. सांख्यतत्त्वकौमुदी, पृ. सं. १११

सक्रियत्वम्, अनेकत्वम्, आश्रितत्वं, लिङ्गत्वं, सावयवत्वं, परतन्त्रत्वञ्चेति। हेतुमत्त्वमनित्यत्वमव्यापित्वं सक्रियत्वमनेकत्वमाश्रितत्वं लिङ्गत्वं, सावयवत्वं परतन्त्रत्वञ्चेति मूलप्रकृतेः अव्यक्तस्य वैधर्म्याणि सन्ति।[१] व्यक्ताव्यक्तयोः साधर्म्याणि त्रिगुणत्वमविवेकित्वं विषयत्वं सामान्यत्वमचेतनत्वं प्रसवधर्मित्वञ्चेति भवन्ति।[२]

दुःखस्वरूपः रजोगुणः, सुखस्वरूपः सत्त्वगुणः मोहस्वरूपश्च तमोगुणो भवति सत्त्वं लघुः प्रकाशकं रजोगुणः उत्तेजकः सक्रियः तमो गुणः गुरुः आवरकश्च भवति। एते गुणाः अन्योऽन्याभिभवाश्रयजनन-मिथुनवृत्तयश्च भवन्ति। पुरुषस्य साधर्म्याणि तु निर्गुणत्वं, विवेकित्वमविषयत्वमसामान्यत्वं चेतनत्वम् अप्रसव-धर्मित्वञ्चेति। तस्मादयं पुरुषः साक्षी केवली, मध्यस्थः द्रष्टा अकर्त्ता[३] च वर्तत इति सिद्धं भवति। पूर्वोक्तप्रकृतिपुरुषयोः साधर्म्यवैधर्म्याभ्यां चैतन्यकर्तृत्वे भिन्नाधिकरणे सिद्धे ततः चेतनोऽहं करोमि इति सामानाधिकरण्यप्रतीतिः भ्रान्तिरेव। भ्रान्तेः कारणन्तु चेतनपुरुषस्य सन्निधानमेव विद्यते। पुरुषसंयोगात् बुद्ध्यादिकमचेतनं चेतनमिव[४] भवति। बुद्ध्यादिरूपेण परिणतानां गुणानां कृतिमत्वेऽपि, बुद्ध्युपरागात् अर्थात् तत्प्रतिबिम्बितत्वात् उदासीनोऽपि पुरुषः कर्ता[५] इव भवति। पङ्ग्वन्धवत्[६] प्रकृतिपुरुषयोः संयोगो भवति तत्र प्रयोजनं भवति प्रधानेन सुखाद्यात्मकस्वस्वरूपानुभवरूपभोगार्थं पुरुषोऽपेक्ष्यते, पुरुषेण च कैवल्यकारणविवेक-ज्ञानरूपप्रकृतिपरिणामार्थं प्रधानमपेक्ष्यते। प्रकृतिपुरुषयोः संयोगेन सर्गो जायते। अध्यवसायो बुद्धेः लक्षणं भवति। अध्यवसायो नाम मया इदं कर्त्तव्यमित्याकारकनिश्चयः। बुद्धौ अष्टौ धर्माः विद्यन्ते उत्पद्यन्ते वा। तत्र विवेकज्ञानोपयोगिनः धर्माः धर्मः, ज्ञानम्, वैराग्यमैश्वर्यञ्चेति सात्विकाः सन्ति। अधर्माज्ञानावैराग्यानैश्वर्यरूपं तामसमिति तत्र धर्मः अभ्युदयनिःश्रेयसहेतुः, प्रकृतिपुरुषयोः विवेकज्ञानमत्र ज्ञानमिति। रागाभावः वैराग्यम् तच्चतुर्विधम् यतमानव्यतिरेकैकेन्द्रियवशीकारभेदात् बुद्धेः सात्विकधर्मः चतुर्थः ऐश्वर्यमिति ऐश्वर्येणैव अणिमा, लघिमा, महिमा, प्राप्तिः, प्राकाम्यं, वशित्वमीशित्वं कामावसायित्वञ्चेति धर्माणां प्राप्तिर्भवति। अत एव ऐश्वर्यमष्टविधं भवति। अणुभावः अणिमा, तया शिलामपि प्रविशति। लघुभावः लघिमा तया सूर्यमरीचीनाश्रित्य सूर्यलोकं स च योगी गच्छति। महतो भावः महिमा यस्मात् योगी महान् भवति। सर्वेषां भावानां सन्निधानं

---

१. हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।
सावयवं परतन्त्रं व्यक्तं विपरीतमत्यक्तम्॥ सांख्यकारिका, १०, पृ. सं. १२०

२. त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्॥ पृ. सं. १२३

३. तस्माच्च विपर्यासात्, सिद्धं साक्षित्वमस्य पुरुषस्य।

४. अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम्। सांख्यसूत्रम् अ. १ सूत्राणि, ९९

५. उपरागात्कर्तृत्वं चित्सान्निध्याच्चित्सान्निध्यात्। सांख्यसूत्रम् अ. २ सू. १६४

६. अध्यवसायो बुद्धिधर्मां ज्ञानं विराग एश्वर्यम्। सात्विकमेतद्रूपं तामसन्ममाद् वि॥ २३॥

प्राप्तिः यस्मादङ्गुल्यग्रेण स्पृशति चन्द्रमसम्। इच्छानभिघातः प्राकाम्यं यतः पृथिव्याम् उन्मज्जति। वशित्वेन भूतभौतिकमवश्यं वशीभवति। पृथिव्यादीनि भूतानि गोघटादीनि भौतिकानि, तेषामुत्पादः अवस्थापनं नाशश्चेति तत्र य समर्थो भवति सः ईशः तादृशं सामर्थ्यम् ईशत्वेन प्राप्यते। कामावसायित्वं नाम सत्यसङ्कल्पता। कामावसायित्वैश्वर्ययुक्तः योगी यथा वाञ्छति वा तस्य सङ्कल्पो भूतेषु यथा भवति तथैव भूतानि भवन्ति। अभिमानोऽहङ्कारस्य लक्षणं भवति। संकल्पकत्वं मनसः लक्षणम्[१]। चक्षुश्रोत्रत्वग्रसना-घ्राणेन्द्रियाणां रूपशब्दस्पर्शरसगन्धेषु सम्मुग्धवस्तुमात्रदर्शनरूपमालोचनं वृत्तिर्भवति। वाक्पाणिपादपायूप-स्थानामिन्द्रियाणां यथाक्रमं वचनादानविहरणोत्सर्गानन्दाश्च[२] वृत्तयः वा व्यापाराः भवन्ति। रात्रौ अन्धकारे यदा दिव्यविद्युतस्य सम्पातो जायते तदा कश्चन पुरुष व्याघ्रमभिमुखमतिसन्निहितं पश्यति तदा चक्षुषा आलोचनं मनसा संकल्पः अहङ्कारेणाभिमानं महता अध्यवसायश्च युगपदेव भवन्ति[३]। कुत्रचित् वस्तुनः सामान्यदर्शने एतच्चतुष्टयं क्रमशः भवति। त्रयोदशविधानि करणानि स्वस्वकार्याणि कुर्वन्ति अत्र पुरुषार्थ एव हेतुर्विद्यते। त्रयोदशविधेषु करणेषु मुख्या बुद्धिरेव विद्यते यतोहि सैव प्रकृतिपुरुषयोः भेदं कारयति। पञ्चमहाभूतानि विशेषपदवाच्यानि भवन्ति। एतानि विशेषः शान्ताः घोराः मूढाश्च भवन्ति। विशेषः त्रिविधः सूक्ष्ममातापितृज-पञ्चमहाभूतभेदात्। मातापितृजशरीरं निवर्तते सूक्ष्मशरीरं नियतं भवति[४]। सृष्टिकाले एव सूक्ष्मशरीर-स्योत्पत्तिर्भवति। सूक्ष्मशरीरे सप्तदशावयवाः[५] भवन्ति। एकादशेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सप्तदशावयवाः सन्ति। अहङ्कारस्यान्तर्भावो बुद्धावेव भवति। मनबुद्ध्यहंकाराणां विशेषवृत्तयः अध्यवसायाभिमानसंकल्पाः सामान्यवृत्तिस्तु प्राणापानव्यानोदानसमानाः वायवः पञ्च भवन्ति। भावैर्युक्तं सूक्ष्मशरीरं जराशरीरं विहाय नूतनशरीरे प्रविशति। भोगापवर्गस्वरूपपुरुषार्थहेतुना सूक्ष्मशरीरं धर्मादिः धर्मादिकारणकं स्थूलदेहादिश्चेतदुभयसम्बन्धेन प्रकृतेर्विभुत्वयोगात् यथा नटः बहूनि रूपाणि गृहीत्वा व्यवहरति तथैव पुरुषदेवादिशरीरं परिगृह्य व्यवहरति[६]। धर्मेण द्युप्रभृतिषु लोकेषु गमनं भवति। अधर्मेण अतलवितलसुतलरसातलतलातलमहातलपाताललोकेषु गमनं भवति। अतत्त्वज्ञानात् प्राकृतिकः वैकृतिकः दाक्षिणकश्चेति बन्धो जायते। तत्त्वज्ञानेन मोक्षस्य प्राप्तिर्भवति।

---

१. उभयात्मकमत्र मनः, सङ्कल्पमिन्द्रियं च साधर्म्यात्॥ सांख्यकारिका, ॥ २७॥ पृ. सं. ३५१
२. वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्॥ सांख्यतत्त्वकौमुदी, २८। पृ. ३५९
३. क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः। अ. २. सू ३२॥ सांख्यसूत्रवृत्ति पृ. १०२
४. मातापितृजं स्थूलं प्रायशः इतरन्न तथा सांख्यसूत्रम्। अ. ३ सूत्राणि ७।. सांख्यसूत्रवृत्तिः पृ. सं. ११०
५. सप्तदशैकं लिङ्गम्॥ अ. ३ सूत्र ७॥ सांख्यसूत्रवृत्ति, पृ. सं. १११
६. पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन।
प्रकृतेर्विभुत्वयोगान्नटवद् व्यवतिष्ठते लिङ्गम्॥ सां. का. ४२, सां. त. कौ. २०२

सांख्यदर्शने प्रत्ययसर्ग: चतुर्विधो भवति। विपर्ययाशक्तितुष्टिसिद्ध्याख्यभेदात्[१]। व्यस्तरूपेण प्रत्ययसर्गस्य पञ्चाशत्भेदा: भवन्ति। तम:, मोह:, महामोह:, तामिस्र:, अन्धतामिस्रश्चेति भेदात् विपर्यय: पञ्चविध:। त्रयोदशकरणानां वैकल्यात् अशक्तेरष्टाविंशतिभेदा: भवन्ति। तुष्टिर्नवधा सिद्धिरष्टधा इति। विपर्ययेषु तम: अष्टविधं मोह: अष्टविध: महामोह: दशविध: अष्टादशधा तामिस्र:. अन्धतामिस्रश्चापि अष्टादशधा भवन्ति। विपर्ययादीनां स्वरूपमधोलिखितं विद्यते।

## तम:=अविद्या[२]

१. प्रकृतिरेव आत्मा इति अज्ञानम् २. बुद्धिरेवात्मा इति अज्ञानम्

२.अहङ्कार एवात्मा इति अज्ञानम् ४. शब्दतन्मात्रा एवात्मा इत्यज्ञानम्

५. स्पर्शतन्मात्रा एवात्मा इत्यज्ञानम् ६. रूपतन्मात्रा एवात्मा इत्यज्ञानम्

७. रसतन्मात्रा एवात्मा इत्यज्ञानम् ८. गन्धतन्मात्रा एवात्मा इत्यज्ञानम्

## मोह:=अस्मिता[३]

१. अणिमा मम शाश्वतिकमैश्वर्यमस्ति इति अभिमान:

२. महिमा मम शाश्वतिकमैश्वर्यमस्ति इति अभिमान:

३. लघिमा मम शाश्वतिकमैश्वर्यमस्ति इत्यभिमान:

४. प्राप्ति: मम शाश्वतिकमैश्वर्यमस्ति इत्यभिमान:

५. प्राकाम्यं मम शाश्वतिकमैश्वर्यमस्ति इत्यभिमान:

६. वशित्वं मम शाश्वतिकमैश्वर्यमस्ति इत्यभिमान:

७. ईशित्वं मम शाश्वतिकमैश्वर्यमस्ति इत्यभिमान:

८.कामावसायित्वं मम शाश्वतिकमैश्वर्यमस्ति इत्यभिमान:

---

१. सांख्य कारिका पृ. सं. ८१
२. सांख्य कारिका पृ. सं. ८२
३. सांख्य कारिका पृ. सं. ८२

## मोहः=अस्मिता

१. दिव्यशब्दरञ्जनीयविषये आसक्तिः २. दिव्यस्पर्शरञ्जनीयविषये आसक्तिः

३. दिव्यरूपरञ्जनीयविषये आसक्तिः ४. दिव्यरसरञ्जनीयविषये आसक्तिः

५. दिव्यगन्धरञ्जनीयविषये आसक्तिः ६. दिव्यगन्धरञ्जनीयविषये आसक्तिः

७. दिव्यरसरञ्जनीयविषये आसक्तिः ८. दिव्यरूपरञ्जनीयविषये आसक्तिः

९. दिव्यस्पर्शरञ्जनीयविषये आसक्तिः १०. दिव्यशब्दरञ्जनीयविषये आसक्तिः

एवं दिव्यादिव्यभेदेन दशविधाः शब्दादिविषयाः परस्परेण उपहन्यमानाः सन्तः द्वेषस्य विषयाः भवन्ति। अष्टविधैश्वर्याणि प्रति द्वेषः तथाचेतेषामष्टादशविधत्वादष्टादशभेदाः[१] तामिस्रस्य भवन्ति अणिमाद्यष्टैश्वर्याणां दिव्यादिव्यभेदेन शब्दस्पर्शरूपरसगन्धान् मिलित्वा अष्टादशविषयाः भवन्ति। एतेषां कश्चन दुष्टः न अपहरतु इति भयं जायते। भयविषयाणामष्टादशविधत्वात् अन्धतामिस्रः अष्टादशधा[२] भवति नवतुष्टीनामभावः अष्टसिद्धीनामभावः एकादशेन्द्रियवधाः तादृशतुष्टिसिद्धीनामभावं विशिष्य बुद्धिश्च तेषां विषयाणामष्टविंशतिविधत्वादष्टाविंशतिभेदाः अशक्तेः[३] भवन्ति। एकादशेन्द्रियाणां बधैः सह बुद्धिवधस्य व्यस्तरूपेण स्वरूपं निम्नलिखितं विद्यते।

## अशक्तिः

१. बाधिर्यं तुष्ट्यभावविशिष्टा बुद्धिः २. कुष्ठित्वं तुष्ट्यभावविशिष्टा बुद्धिः

३. अन्धत्वं तुष्ट्यभावविशिष्टा बुद्धिः ४.जडत्वं तुष्ट्यभावविशिष्टा बुद्धिः

५. अजिघ्रत्वं तुष्ट्यभावविशिष्टा बुद्धिः ६. मूकत्वं तुष्ट्यभावविशिष्टा बुद्धिः

७. कौण्यं तुष्ट्यभावविशिष्टा बुद्धिः ८. पङ्गुत्वं तुष्ट्यभावविशिष्टा बुद्धिः

९. क्लैव्यं तुष्ट्यभावविशिष्टा बुद्धिः १०. उदावर्तं तुष्ट्यभावविशिष्टा बुद्धिः

---

१. अवान्तरभेदाः पूर्ववत् सां. सू. अ. ३. सू. ४१

२. भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः।
तामिस्रोऽष्टादशधा तथाभवत्यन्धतामिस्रः॥ ४८॥ सा.पृ. सं. सां. त. कौ. पृ. सं. ४१९

३. एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा।
सप्तदशवधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम्॥ सां. का. ४९॥ पृ. सं. ४२३

| | |
|---|---|
| ११. मन्दता[४] तुष्ट्यभावविशिष्टा बुद्धिः | १२. अम्भतुष्ट्यभावविशिष्टा बुद्धिः |
| १३. सलिलतुष्ट्यभावविशिष्टा बुद्धिः | १४. ओघ तुष्ट्यभावविशिष्टा बुद्धिः |
| १५. वृष्टितुष्ट्यभावविशिष्टा बुद्धिः | १६. पारतुष्ट्यभावविशिष्टा बुद्धिः |
| १७. सुपारतुष्ट्यभावविशिष्टा बुद्धिः | १८.पारापारविशिष्टा बुद्धिः |
| १९. अनुत्तमाम्भविशिष्टा बुद्धिः | २०. उत्तमाम्भविशिष्टा बुद्धिः |
| २१. तारसिद्ध्यभावविशिष्टा बुद्धिः | २२. सुतारसिद्ध्यभावविशिष्टा बुद्धिः |
| २३. तारतारसिद्ध्यभावविशिष्टा बुद्धिः | २४. रम्यकसिद्ध्यभावविशिष्टा बुद्धिः |
| २५. सदामुदितसिद्ध्यभावविशिष्टा बुद्धिः | २६. प्रमोदसिद्ध्यभावविशिष्टा बुद्धिः |
| २७. मुदितसिद्ध्यभावविशिष्टा बुद्धिः | २८. मोदमानसिद्ध्यभावविशिष्टा बुद्धिः |

व्यस्तरूपेण अशक्तेरष्टविंशतिभेदाः उक्ताः। नवतुष्टीनामष्टसिद्धीनां लक्षणमिदानीमुच्यते—

तुष्टयः नवविधाः[१] भवन्ति। चतस्रः आध्यात्मिक्यः तुष्टयः पञ्चबाह्यतुष्टयश्च। आत्मनमधिकृत्य जायमानाः तुष्टयः भवन्ति। अत एव वाचस्पतिमिश्रोऽपि ब्रवीति 'प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य यस्मात्ताः तुष्टयस्तस्माद्' 'आध्यात्मिक्यः' 'प्रकृत्युपादानकालभागाख्याः[२]' इति। अनिरुद्धवृत्तिकारोऽपि वदति 'अनात्मनि आत्मबुद्ध्या प्रवर्त्तमाना आध्यात्मिक्य चतस्रः[३]' चतुष्टयः भवन्ति। प्रकृतिविवेकदर्शनात् चेत् मुक्तिः अत एव प्रकृतिरेव उपास्या इति मत्वा यः प्रकृतिमुपासते एषा प्रकृतितुष्टिः अम्भपदवाच्यः विवेकज्ञानात् अपि न साक्षात्, अदर्शनात् व्रतग्रहणात्, वा सन्यासग्रहणात् भविष्यति 'प्रव्रज्यामुपाददीथाः, कृतं ते ध्यानाभ्यासेनायुष्मन्[४]' इति उपदेशे या तुष्टिः सोपादानाख्या सलिलमिति।

सन्यासग्रहणेनापि न सद्यः मुक्तिरपि तु कालपरिपाकमपेक्ष्य सिद्धिं ते विधास्यन्ति इयं तुष्टिः कालाख्या ओघपदवाच्या भवति। कालवशादपि न सर्वेषां मुक्तिः अपि तु भाग्यादेव भविष्यति। अथवा

---

१. बाधिर्यं कुष्ठिताऽन्धत्वं जडताऽजिघ्रता तथा।
मूकता कौण्यपङ्गत्वे क्लै................................ ॥

२. आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभागाख्याः।
बाह्याविषयोपरमात्पञ्च च नव तुष्टयोऽभिमता॥ ५०॥ सां. का. सां. त. कौ. पृ. ४२६

३. सां. तत्त्व. कौ. पृ. सं. २२७

४. सांख्यसूत्रवृत्ति, पृ. सं. १२३

५. सांख्यतत्त्वकौमुदी, पृ. सं. ४२८

जन्मान्तरकृतध्यानाभ्यासजनितादृष्टद्वारैव मुक्तिः भविष्यति इति उपदेशे या तुष्टिः भवति सा भागाख्या वृष्टिपदवाच्या इति। विषयार्जनदुःखादुपरमे पारतुष्टिः, विषयरक्षणदुःखादुपरमे सुपारतुष्टिः क्षयं भावयतः दुःखादुपरमे पारपारतुष्टिः भोगदोषं भावयतः दुःखादुपरमे अनुत्तमाम्भतुष्टिः, नानुपहत्य भूतानि भोगसिद्धिः इति दुःखादुपरमे उत्तमाम्भतुष्टिः च भवन्ति। उहः तर्कः मननमिति ऊहसिद्धिः१ सुतारमिति। ऊहसिद्धेः स्वरूपं प्रतिपादयनाह सांख्यतत्त्वकौमुदीकारः 'ऊहः तर्कः आगमाविरोधिन्यायेन१ आगमार्थपरीक्षणम्। परीक्षणञ्च संशयपूर्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थापनमि'ति। शब्दज्ञानं द्वितीया तारसिद्धिः, अथवा शब्दजनितमर्थज्ञानम् शब्दसिद्धिरिति। अध्ययनं तृतीया सिद्धिः तारतारमिति वा विधिवद्गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहण-मध्ययनसिद्धिरिति। गुरुब्रह्मचारिणां प्राप्तिः सुहृत्प्राप्तिरूपा सिद्धिः रम्यकमिति. वा न्यायेन स्वयं परीक्षितमप्यर्थं न श्रद्धते न यावद् गुरुशिष्यसब्रह्मचारिभिः सह संवाद्यते, अतः सुहृदां गुरुशिष्यसब्रह्मचारिणां संवादकानां प्राप्ति सुहृत्प्राप्तिः। बाह्यान्तःशुद्धिः[३] पञ्चमीसिद्धिः सदामुदितमिति अथवा दानं शुद्ध[४]विवेकज्ञानम् तच्च सवासनसंशयविपर्यासानां परिहारेण विवेकसाक्षात्कारस्य स्वच्छप्रवाहेऽवस्थापनमिति।

आध्यात्मिकदुःखविघातः प्रमोदनामिका सिद्धिः१। आधिभौतिकदुःखविघातः मुदितनामिका सिद्धिः। आधिदैविकदुःखविघातः अष्टमी मोदमानाख्या सिद्धिरिति प्रत्ययसर्गस्य अवान्तरभेदः प्रतिपादितः। भूतादिसर्गस्यावान्तरभेदं प्रतिपादयिष्ये इति। दैवसर्गस्य अष्टप्रकारो भवति। ब्राह्मः, प्राजापत्यः, ऐन्द्रः, पैत्रो, गान्धर्वो, याक्षो, राक्षसः, पैशाचश्चेति। तैर्यग्योनश्च पञ्चविधो भवति पशुमृगपक्षिसरीसृपस्थावरा इति। मानुषकश्च एकविधो भवति। भूवलोकस्वर्गलोकमहलोकजनलोकसत्यलोकेषु सत्त्वगुणस्य बहुलता भवति। भूर्लोके रजोगुणस्य, पश्वादिस्थावरान्तेषु तमोगुणस्य बहुलता च भवति। यथा नर्तकी नृत्यं दर्शयित्वा नृत्यात् निवर्तते तथैव प्रकृतिः आत्मानं दर्शयित्वा निवर्तते। प्रकृतिः सुकुमारतरा वर्तते स्वं रूपं प्रदर्श्य सा परावृता भवति। पुरुषः गुणरहितः अपरिणामी विद्यते अथ कश्चिद् पुरुषः न बद्धो भवति न प्रेत्यभावापरनामानं संसारं लभते नापि पुरुषः मुक्तो च भवति इति। धर्मवैराग्यैश्वर्यानैश्च धर्माज्ञानावैराग्यैरेभिः सप्तभिः आत्मना आत्मानं बध्नाति। विवेकज्ञानरूपेणैकेन पुरुषं विमोचयति इति। तत्त्वविषयज्ञानाभ्यासात् संशयभ्रमराहित्यात् प्रमात्मकं मिथ्याज्ञानरहितं नास्ति परिशेषः ज्ञातव्यो विषयो यस्मिन् तादृश्यम् अहं क्रियाशून्योऽस्मि, अहम् अकर्ताऽस्मि

---

१. सांख्यसूत्रवृत्ति, पृ. सं. १२६

२. अष्टविकल्पोदैवस्तैर्यग्योनश्च पञ्चधा भवति।
मानुषकश्चैकविधः समासतो भौतिकः सर्गः॥ सां. का. ५३॥ सां. त. कौ. पृ ४५।

३. ऊर्ध्वं सत्त्वविशाला॥ अ. ३ सू. ४८॥ तमोविशालामूलतः अ. ३ सू ४९। मध्येरजो विशाल, अ. ३ सू. ५०

४. रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मनाप्रकृतिः। सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण सांख्यतत्त्वकौमुदी, पृ. सं. ४८४

स्वामितारहितोऽस्मि इति ज्ञानं जायते। अत्र वाचस्पतिमिश्रोऽपि वदति 'यतश्चात्मनि व्यापारावेशो नास्त्यतो 'नाहम्'। अहमिति कर्तृपरम्। 'अहं जानामि' 'अहं जुहोमि' 'अहं ददे' 'अहं भुजे' इति सर्वत्र कर्तुः परामर्शात्, निष्क्रियत्वे च सर्वकर्तृत्वाभावः। ततः सुष्ठूक्तम् 'नाहम्' इति। अत एव 'न मे' कर्ता हि स्वामितां लभते, तदभावात्तु कुतः स्वाभाविकी स्वामिता इत्यर्थः। अथवा 'नास्मि' इति पुरुषोऽस्मि न प्रसवधर्मा इति। विवेकज्ञाने जाते सति प्रकृतिः मया दृष्टा इति निश्चित्य पुरुषः प्रकृतिं पुनः सकौतुकं द्रष्टुं नेच्छति। प्रकृतिरपि पुरुषेणाहं दृष्टा इति निश्चित्य विरमति न पुनर्दर्शनाय प्रवर्तते इति। सांख्यनये मोक्षस्तु द्विविधो भवति जीवन्मुक्तिः विदेहमुक्तिश्च। विशुद्धज्ञानप्राप्तेः देहारम्भकानां संचितक्रियमाणानां धर्मादीनां संसारकारणत्वाप्राप्तौ अर्थात् स्वाश्रये स्वफलोत्पादनसामर्थ्यस्य प्राप्तौ दाहारम्भकादृष्टवशात् स च तत्त्वज्ञानी धृतशरीरः तिष्ठति यथा कुलालव्यापारात् चक्रे वेदसंस्कारो जायते ततः घटनिर्माणानन्तरमपि चक्रः भ्रमि तिष्ठति तथैव तत्त्वज्ञानीति द्वयमवस्था जीवन्मुक्तस्य भवति। जीवन्मुक्तौ श्रुतिरपि प्रमाणं विद्यते।

**दीक्षयैव नरो मुच्येत्तिष्ठेन्मुक्तोऽपि विग्रहे।**
**कुलालचक्रमध्यस्थो विच्छिन्नोऽपि भ्रमेद् घटः[२]॥**

सांख्यदर्शने जीवन्मुक्तिः स्वीक्रियत इत्यत्र सूत्रत्रयं प्रमाणं विद्यते। 'जीवन्मुक्तश्च[३]' 'चक्रभ्रमणवद्धृतशरीरः[४]' 'संस्कारलेशस्तत्सिद्धिः[५]' अर्थात् जीवन्मुक्तः मुक्तो भवति रागाभावात्। यथा दण्डस्यापगमे वेगसंस्कारवशात् चक्रं भ्रमति तथैव तत्त्वज्ञानिनामपि देहधारणकर्मणः अक्षयत्वात् तस्मिन् क्षणे विदेहमुक्तिस्तु न भवति परन्तु सञ्चितकर्मणां क्षयात्। जीवन्मुक्तिदशायां संस्कारस्य विद्यमानत्वात् जीवन्मुक्तस्य सिद्धिर्भवति। तदनन्तरमारब्धभोगेन कर्मणोत्पादितस्य शरीरस्य नाशो जायते जाबुद्धितत्त्वादिद्वारा भोगापवर्गपुरुषार्थयोः प्राप्त्यनन्तरं प्रधानं विनिवर्तते। ततः पुरुषः ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति। अत्र सूत्रकारः वदति--'विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यः नेतरान्नेतरात्[६]' अर्थात् अशेषरूपे त्रिविधदुःखस्यात्यन्तनिवृत्तौ कृत्यकृत्यः पुरुषः परममुक्तिं प्राप्नोति। मोक्षस्वरूपं प्रतिपादयनाह सूत्रकारः--'द्वयोरेकतरस्य वौदासीन्यमपवर्गः[७]' अर्थात्

१. दृष्टा मयेत्युपेक्षक एको दृष्यहमित्युपरमत्यान्या।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥ सां. का. ६६॥
२. सांख्यसूत्रवृत्ति., पृ. सं. १४०
३. सांख्यसू. अ. ३ सू. ७८
४. सांख्यसूत्रम् अ. ३ सूत्र. ८२
५. सांख्यसूत्रम् अ. ३ सू. ८३
६. सांख्यसूत्रम् अ. ३ सू. ६५, सांख्यसूत्रवृत्तिः, पृ. १३३
७. सांख्यसूत्रम् अ. ३ सू. ८४

प्रकृतिपुरुषयो:, प्रकृते: औदासीन्यं विवेकिनं प्रति अप्रवर्तनम्, पुरुषस्य औदासीन्यं प्रकृत्यनभिष्वङ्ग: उभयोरेकतर: पुरुष: तस्य स्वस्वरूपे अवस्थानं मोक्ष: इति संक्षेपेण पञ्चविंशतितत्त्वानां निरूपणं मया विहितं विस्तरभयादत्रैव विरम्यते चित्ररूपेण जगत: विकासक्रम: उच्यते—




अनया रीत्या समासत: पञ्चविंशतितत्त्वानां स्वरूपं प्रतिपादितमिति।

# प्रायश्चित-पदार्थविमर्शः

डॉ० हिमांशुशेखरत्रिपाठी

प्रायश्चित्तशब्दः अतीवप्राचीनकालात् आरभ्य प्रचलितो विद्यते इति समवलोक्यते। वेदेषु श्रौतसूत्रेषु, उपनिषत्सु, धर्मशास्त्रेषु सर्वत्रैव प्रायश्चित्तशब्दः व्यवहृतः स एव प्रायश्चित्तशब्दः कुत्रचित् प्रायश्चित्ति-शब्देनापि अभिधीयते। यथा तैत्तिरीयसंहितायाम्[३]–

"एष वै प्रजापतिः सर्वं करोति योऽश्वमेधेन यजते, सर्व एव भवति सर्वस्य वा एषा प्रायश्चित्तिः सर्वस्य भेषजम्" इति।

[४]तत्राऽपि प्रायश्चित्तशब्दः इत्थं दृश्यते यत् 'असावादित्यो न व्योशेचत तस्मै देवाः प्रायश्चित्तीमैच्छन' इति। [५]कौषितकिब्राह्मणेऽपि प्रायश्चित्तशब्दः प्रयुक्तः। [६]आश्वलायनश्रौतसूत्रे विध्यपराधे प्रायश्चित्तं इति कथनात् विध्यतिक्रमः पापं तदर्थं च प्रायश्चित्तविधानं कृतम् इति दृश्यते। दोषपरिहारार्थं ज्ञानात् अज्ञानात् वा विध्यपराधकृते भगवतः नारायणस्य जपहोमादिभिः पापं नश्यति तत् च प्रायश्चित्तनाम्ना [७]सांख्यायनश्रौतसूत्रे प्रतिपादितम्। यथा– 'विध्यपराधे प्रायश्चित्तं दोषविघातार्थं विधीयतेऽनाज्ञातो विशेषे ध्यानं नारायणस्य तज्जपेज्याहोमाश्च हननार्थमिति'।

[८]आश्वलायनश्रौतसूत्रस्य नारायणटीकायां प्रायो विनाशः, चित्तिः सन्धानं अर्थात् विनष्टस्य सन्धानं प्रायश्चित्तमिति उक्तम्। प्रायश्चित्तद्वारा दुष्कृतकर्मणः मोचनं भवति, तदर्थं प्रायश्चित्तं विधीयते। [९]जैमिनीयसूत्रभाष्यकारेण शबरेण प्रायश्चित्तस्य प्रकारद्वयं स्वव्याख्यायां प्रदर्शितम्। यथा– प्रथमतः

---

१. ध. शा. इ. भाग. १, पृ. ९५
२. ध. दु. पृ. १०५
३. तै. सं. ५.३.१२.१
४. ते. सं. २.१.२.४
५. कौ. ब्रा. ५.९.६.१२
६. आ. श्रौ. सू. ३.१०
७. सां. श्रौ. सू. ३.१९.१
८. विहितस्याकरणेऽन्यथाकरणे च प्रायश्चित्तः कर्त्तव्यः। प्रायो विनाशः चित्तिः सन्धानम्। विनष्संधान प्रायश्चित्तित्युक्तं भवति। आश्व. श्रौ. सू. ३.१०
९. जै. सू. १२.३.१६

यज्ञानुष्ठाने प्रमादवशात् शास्त्रविहितविधानानामननुष्ठानं तथा यज्ञाकरणादिना पतनं कुप्रभावकारकं इति कथितम्। द्वितीयत: शास्त्रविहितस्य अकरणं तथा निषिद्धस्य आचरणं पापोत्पत्तिकारकम्। अत: उपर्युक्तानां पापानां निराकरणार्थं यत् क्रियते तत् प्रायश्चित्तम् इति कथ्यते। यदि कश्चन शूकर:, मेष: वा यज्ञवेद्यां मध्ये धावेत् अग्निहोत्रहोमार्थं गोदोहनकाले दुग्धं भूमौ अभिधायते, तथा यदि दुग्धपात्रं विनष्टं भवति, होमे प्रारब्धे सति यदि अग्नि: निर्वापितो भवति तर्हि एतासु स्थितिषु कर्त्ता आत्मनि पापसत्तां परिकल्प्य प्रायश्चित्तानुष्ठानं कुर्यादिति एतेभ्य: वैदिकानुष्ठानेभ्य: ज्ञायते[१]।

धर्मशास्त्रे प्रायश्चित्तशब्दस्य व्युत्पत्ति: संकल्प: अथवा दृढविश्वास: इति प्रतिपादितम्। अर्थात् निश्चितरूपेण तपश्चरणद्वारा पापं नश्यति इति तात्पर्य्यार्थ: प्रकाशित:। तद्धि शूलपाणिना अंगिरोवचनं[२] उट्टंक्य प्रतिपादितम्। [३]गौतमधर्मसूत्रस्य अन्यतमटीकाकारेण हरदत्तेनापि तदेव प्रोक्तम्। यथा–

**प्रायो नाम तप: प्रोक्तं चित्तं निश्चय उच्यते।**
**तपो निश्चयसंयोगात्प्रायश्चित्तमिति स्मृतम्।।**

[४]मिताक्षराकारेण 'प्रायश्चित्तशब्दश्चायं पापक्षयार्थे नैमित्तिके कर्मविशेषे रूढ:' इति प्रतिपादितम्। परन्तु याज्ञवल्क्यस्मृते: मिताक्षराटीकाया: [५]बालभट्टीटीकायां कथितं यत् प्रायशब्दस्य अर्थ: पापं, चित्तशब्दस्य अर्थ: विशोधनम् पापनिवर्त्तनक्षमधर्मविशेषे योगरूढोऽयं शब्द इति। एतदपि पक्षधरमिश्र-टोडरानन्दप्रभृतिभि: अंगीकृतम्। [६]प्रायश्चित्तमयूखकारेण श्रीमता नीलकण्ठभट्टेन अपि प्रायश्चित्तशब्दस्य अर्थ: इत्थं प्रतिपादितम् यथा– "विहिताननुष्ठाननिन्दितसेवननिमित्तं विहितं कर्म प्रायश्चित्तम्" विषयेऽस्मिन् [७]हेमाद्रिणा प्रायो विनाश: चित्तं सन्धानं विनष्टस्य सन्धानं इति विभागयोगेन प्रायश्चित्तशब्द: पापक्षयार्थे नैमित्तिके कर्मविशेषे वर्तते इति उक्तम्। [८]पराशरमाधवीये माधवाचार्य्येणाऽपि उक्तं यत्–

**प्रायशश्च समं चित्तं चारयित्वा प्रदीयते।**
**पर्षदा कार्यते यत् तद् प्रायश्चित्तमिति स्मृतम्।।**

---

१. ऐ. ब्रा. ३२.३-११
२. प्रा. वि. पृ. २
३. गौ. ध. सू. २२.१
४. या. स्मृ. मिता. पृ. ४०६
५. "प्राय: पापं विनिर्दिष्टं, चित्तं तस्य विशोधनम्" या. स्मृ. बालं. टी. ३.२०६
६. प्रा. म. पृ. २
७. हेमाद्रि – प्रायश्चित्तखण्ड पृ. १८९
८. प. मा. भाग. १, पृ. ३

पापिनोऽनुतापिनश्च चित्तं व्याकुलं सद् विषमं भवति, तच्च पर्षदा येन व्रतानुष्ठानेन प्रायशोऽवश्यं समं कार्यते तद् व्रतं प्रायश्चित्तम्।

पुनश्च [१]सामविधानब्राह्मणे सायणाचार्येण स्वव्याख्यायां उक्तम् यत् शुद्ध्यभावे प्रायश्चित्तानां विधानम्। तत्र प्रकर्षेण अयः प्रायः प्रकर्षेणायः प्राप्तिः विहितकर्माकरणस्य प्राप्तिरित्यर्थः। तत्प्रतिकारविषयं चित्तिर्ज्ञानम्। तत्पूर्वानुष्ठानानि प्रायश्चित्तानि इति। यद् वा प्रायो नाम विहिताकरणादिप्रतीकाररूपं तप उच्यते। तद्विषया निश्चयाः प्रायश्चित्तानि। [२]हारीतेन प्रायश्चित्तशब्दस्य व्युत्पत्तिः इत्थं विहिता यत्–

प्रयतत्वादुपचितमशुभं कर्म नाशयतीति प्रायश्चित्तमिति। यत्तपः प्रभृतिकं कर्म उपचितं संचितमशुभं पापं नाशयतीति। तत्कृतकर्मभिः कर्त्तुं प्रयतत्वाद् वा शुद्धत्वादेव तत्प्रायश्चित्तम्। तथा च पुनर्हारीतः यथा– क्षारोपस्वेदचगड - निर्णोदनप्रक्षालनादिभिर्वासांसि शुध्यन्ति एवं तपोदानयज्ञैः पापकृतः शुद्धिमुपयान्ति। एवं तपोदानयज्ञैः पापं नश्यति इति कल्पितम्। प्रसंगेऽस्मिन् याज्ञवल्क्यस्मृतेः टीकाकारेण विज्ञानेश्वरेण [३]स्वमिताक्षराटीकायां स्पष्टीकृतं यत् - प्रायश्चित्तशब्दः पापक्षयार्थे नैमित्तिके कर्मविशेषे रूढः। अद्य यद्यपि पापोपशमनार्थ एतत् प्रयुज्यते तथापि एतत् न काम्यं कर्म इति तेनैव प्रत्यपादि। यतः–

**[४]चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये।**
**निन्द्यैर्हि लक्षणैर्युक्ता जायन्तेऽनिष्कृतैनसः।।**

इत्यकरणे दोषेश्रवणेनावश्यकत्वावगमात्। परन्तु [५]जाबालिना नैमित्तिकत्वं काम्यत्वं च उभयथा प्रतिपादितम्। मनुना वेदप्रतिपादितस्य कर्मणः अननुष्ठानात्, वेदनिन्दितानां कर्मणां संसेवनात् इन्द्रियाणां अनिग्रहाच्च नरः प्रायश्चित्तार्हो भवतीति उक्तम्।

योगीश्वरेण याज्ञवल्क्येनाऽपि शास्त्रविहितस्य कर्मणः अननुष्ठानात् निन्दितस्य च कर्मणः संसेवनात् इन्द्रियाणां अनिग्रहाच्च नरः पतति इति उक्तम्। सूत्रकारेषु मूर्द्धन्यभूतेन [६]गौतमेन तदेव प्रतिपादितम्। हरदत्तेन सूत्रव्याख्यानकाले प्रायः शब्दस्य महाप्रस्थानमिति अर्थः अभिहितः। परन्तु यथार्थतः, प्रायः इति पदेन ब्रह्मचर्यादिपतः एव उच्यते। तद्धि गौतमेन उक्तम् यत् - ब्रह्मचर्यं, सत्यवचनं, सवनेष्वोदकोपपर्शनमार्द्रवस्त्रता, अधः शयिता, अनाशक इति तपांसि। अर्थात् कठिनं तपः प्रायश्चित्तमिति तेनोक्तम्। एवं शास्त्रेषु प्रायश्चित्तशब्दस्य अर्थः पापक्षयार्थत्वेन प्रदर्शितः इति ज्ञायते।

---

१. सा. वि. ब्रा. प्रथमप्रपाठकः ५.१ पृ. ६२
२. प्रा. त. पृ. ४६७
३. या. स्मृ. मिता. पृ. ४०६
४. म. स्मृ. ११.५३ मिता. पृ. ४०६
५. "काम्यं नैमित्तिकं चातः प्रायश्चित्तमिति स्थितिः" प्रा. म. पृ. ३
६. गौ. ध. सू. ३.१.१४

शास्त्रोक्तकर्मण: अनाचरणेन शास्त्रनिषिद्धकर्माचरणेन च नर: प्रायश्चित्तं कुर्यादिति [१]मनुना विहितम्। तस्य प्रायश्चित्तस्य लक्षणं प्रायश्चित्तविवेककारेण [२]शूलपाणिना कृतम् यत् - "प्रयतत्वात् वोपचितमशुभं नाशयतीति"। [३]नागोजिभट्टेन स्वविरचिते प्रायश्चित्तेन्दुशेखरग्रन्थे उक्तम् यत् - शास्त्रोक्तकर्मण अनाचरणेन यद्शुभं उत्पद्यते तदशुभनाशाय यत् कर्म अनुष्ठीयते तदेव प्रायश्चित्तपदवाच्यम्– "यथा विध्यननुष्ठानादुपचिताशुभनाशकमेव तत् प्रायश्चित्तम्"।

धर्मशास्त्रकारेण [४]वसिष्ठेनाऽपि अनभिसन्धिकृते अपराधे यत् क्रियते तथा अभिसन्धिकृतेऽपि यत् कर्म पापोपशमनाय क्रियते तद् प्रायश्चित्तमिति अभिहितम्। अतएव साधारणतया पापविनाशमुद्दिश्य यत् कर्म विधीयते तत् प्रायश्चित्तमिति बोध्यते यत: षट्सु स्मार्त्तधर्मेषु नैमित्तिकधर्मे अस्यान्तरर्भाव: जात:। भगवन्तभास्करग्रन्थस्य प्रणेता पण्डिनीकण्ठभट्टेन स्वरचिते प्रायश्चित्तमयूखे - 'विहिताननुष्ठाननिषिद्धसेवनिमित्तं यत् विहितं कर्म तत् प्रायश्चित्तमिति' प्रायश्चित्तलक्षणमकारि। सामविधानब्राह्मणस्य प्रथमप्रपाठकस्य पंचमखण्डे प्रायश्चित्तलक्षणनिरूपणावसरे सायणाचार्य्येण अगिरोवचनं उद्धृत्य स्वमतं अपि प्रकाशितम् यत् शुद्ध्यभावे तदर्थं यत् विहितं तद् प्रायश्चित्तमिति। तथा च विहिताकरणादिप्रतिकाररूपं तप: प्रायश्चित्तमिति उच्यते। तत्र आपन्न: प्रायश्चित्तं चरेदिति उपदिष्टम् अर्थात् प्रमादादिभि: मार्गात् य: भ्रष्ट: स: आपन्न: इति कथ्यते। स: पापक्षयार्थं यत् कृच्छ्रादि व्रतानि आचरति तत् प्रायश्चित्तमिति कथ्यते इति इति भाव:।

---

१. म. स्मृ. ११.४४ या. स्मृ. ३.२१९
२. प्रा. वि. पृ. ४
३. प्रा. शे. पृ. १
४. व. ध. सू. २०.१-२

# बारसअणुवेक्खाग्रन्थप्रतिपादितद्वादशभावनानिरूपणम्

**डॉ० कुलदीपकुमारः**

कस्मिन्नपि विषये पौनःपुन्येन चिन्तनमनुप्रेक्षेत्युच्यते। जैनाचार्यैर्मोक्षप्राप्तये वैराग्यवृद्ध्यर्थं च द्वादशानुप्रेक्षाणां वर्णनं कृतमस्ति। एता द्वादशवैराग्यभावनानाम्नापि व्यवह्रियन्ते। आसामनवरत चिन्तनेन जीवः शरीरात् भोगेभ्यश्च विरक्तो भूत्वा समताभावं प्राप्नोति।

**अनुप्रेक्षालक्षणम्—**

शरीरादीनां स्वभावानुचिन्तमनुप्रेक्षा[१]—इत्यानुप्रेक्षालक्षणम्। शरीरादिस्वभावानां पुनः पुनः चिन्तनमनुप्रेक्षेत्युच्यते— इत्यस्य विवरणम्। अनुप्रेक्षाणां वर्णनं जैनाचार्याणामत्यन्तं प्रियतमो विषयोऽस्ति। प्रायशः सर्वैर्जैनाचार्यैः स्वकृतिषु एतद्विषये वर्णनं कृतं विद्यते। क्वचित् जैनग्रन्थेषु पुनः पुनरपि एतद्विषये प्रतिपादनं कृतं दृश्यते यथा—महापुराणादिग्रन्थेषु यदा कदापि कस्यचन राज्ञः प्रसङ्गो भवति तदा आचार्यैः तत्तदवसरे द्वादशभावनानां वर्णनमवश्यं कृतमस्ति। वस्तुतस्तु द्वादशभावनाः तादृशविशिष्टविषयोऽस्ति यः चतुर्षु अनुयोगेषु सर्वजैनपरम्परासु सहर्षं सम्मनितोऽस्ति। एतदतिरिच्य कैश्चित्तु जैनाचार्यशिरोमणिभिः स्वतन्त्ररूपेणाप्यनुप्रेक्षाणमुपरि ग्रन्थाः लिखिताः सन्ति यथा—आचार्यकुन्दकुन्दरचितः 'बारसअणुवेक्खा ग्रन्थः', एवं स्वामिकार्तिकेयरचितः 'कार्तिकेयानुप्रेक्षा' चेत्यादयः।

**भावनानां महत्त्वमुपयोगिता च—**

पूर्वमेव स्पष्टीकृतं यत् पुनः पुनः चिन्तनमेवानुप्रेक्षेति। इदानीं विचार्यते यत् कोऽपि पुनः पुनः चिन्तनं किमर्थं करोतीति। तत्रेत्थं प्रतीयते यत् कस्यापि वचनस्य दृढ़ीकरणाय वारं वारं चिन्तयतीति। भावनानामपीदमेव कार्यम्। साधकः तत्त्वज्ञानं यत् प्राप्नोति तस्य दृढीभावनाभिरेव सम्भवति। अनादिकालादद्यपर्यन्तं वयमस्मिन् संसारे शरीरादिसंयोगविषयभोगांश्चैव शाश्वतत्वेन लाभकारित्वेन अस्मच्छरण्यत्वेन च मत्वा तत्रैव प्रवृत्ताः स्मः। इदानीं तत्त्वज्ञानेन तेषामनित्यत्वमशरणत्वं चावगतं, किन्त्वगमनानन्तरमपि तत्रैव प्रवर्तामहे। अतः अनुप्रेक्षाद्वारा तत्त्वज्ञाने यदि दृढीभावो भवेत् तदा त्वेतेषु आसक्तिर्न्यूना भवेत् अथ च वैराग्यभावनाया

१. सर्वार्थसिद्धि, ९/२/४०९

वृद्धिर्भवेत्। द्वादशभावनानां चिन्तनेन वयं संसारेऽस्मिन् अनासक्ता भवाम:। पद्मपत्रगतजलबिन्दुरिव विरक्ता भवाम: प्रसन्नाश्च भवाम इति द्वादशभावनानामस्ति महद्वैशिष्ट्यम्।

**चिन्तनरीति:–**

प्रायश: अनेके जना: भावनानां चिन्तनं कुर्वन्तो दु:खिनो हताशाश्च भवन्ति। यतो हि ते चिन्तयन्ति यत् सर्वमनित्यमस्ति। एकस्मिन् दिने एतत् सर्वं नश्यति। वयं तद्विरहेण कथं जीवाम: इत्यादिविचारा: तेषां मनसि भवन्ति। किन्तु ज्ञातव्यमिदमस्ति यत् सर्वैराचार्यैर्भावनानां दु:खदायकत्व नोक्तम्, अपि तु आनन्ददायकत्वमेवोक्तम्। अत: चिन्तनमेवं स्यात् येन शान्तचित्तता आनन्दश्चोत्पद्येत न तु दु:खं निराशा च। द्वादशभावनानां चिन्तनेन एतादृशविवेकभाव: उत्पद्येत यदनित्यत्वादिकं वस्तुस्वभाव एव, अतऽत्र निराशाया: स्थानं नस्तीति।

**भावनाप्रभेद: तत्स्वरूपम्–**

द्वादशभावना: एवं प्रकारेण सन्ति–

१. अनित्यानुप्रेक्षा

२. अशरणानुप्रेक्षा

३. संसारानुप्रेक्षा

४. एकत्वानुप्रेक्षा

५. अन्यत्वानुप्रेक्षा

६. अशुचित्वानुप्रेक्षा

७. आस्रवानुप्रेक्षा

८. संवरानुप्रेक्षा

९. निर्जरानुप्रेक्षा

१०. लोकानुप्रेक्षा

११. बोधिदुर्लभानुप्रेक्षा

१२. धर्मानुप्रेक्षा चेति।

उपर्युक्तासु षड्भावना वैराग्यपरा: षड्भावनाश्च ज्ञानपरा: सन्ति। आदिमषड्भावना: वैराग्यमुत्पादयन्ति। यदाअस्माकं हृदयभूमौ चिन्तनेन वैराग्यजलमासिक्तं भवति तदा षड्भावना: तत्त्वज्ञानस्य बीजारोपणं कुर्वन्ति। जैनग्रन्थेषु अनुप्रेक्षाणां क्वचित् क्रमे संज्ञायाञ्च वैलक्षणयं दृश्यते यथा अनित्यानुप्रेक्षाया कैश्चित् आचार्यै: अध्रुवानुप्रेक्षेति संज्ञा कृता। एवं धर्मानुप्रेक्षाया: प्राथम्यं कदाचित् च बोधिदुर्लभानुप्रेक्षाया: प्राथम्यम्। परन्तु एतादृशं लघुवैलक्षण्यं नाधिकविचारयोग्यम्। यतोहि भावनानामाधारावधारणायां क्वचिदपि किञ्चिदपि वैलक्षण्यं नास्ति। अनुप्रेक्षाणां चिन्तनम् आचार्यैर्व्यवहारदृष्ट्या निश्चयदृष्ट्या च कृतमस्ति। इदानीं वयमेतासां स्वरूपं ज्ञातुमुद्युक्ता भवाम:।

**१. अनित्यानुप्रेक्षा–** इदं शरीरमिन्द्रयाणि सम्पूर्णा चेयं भोगोपभोगसामग्री क्षणभङ्गुराऽस्ति। ऐतेषामनित्यत्वानुचिन्तनमेव अनित्यानुप्रेक्षा। यतो हि ऐतेषां नित्यत्वनिश्चयादेव जन: अज्ञानेन मोहवशात् च सुखी दु:खी च भूत्वा संसारतापमनुभवति। एतयषये आचार्या: पूज्यपादा: स्वग्रन्थे लिखन्ति यत्–

**'इमानि शरीरेन्द्रियविषयोपभोगद्रव्याणि जलबुद्बुद्वदनवस्थितस्वभावानि गर्भादिष्ववस्था विशेषेषु सदोपलभ्यमानसंयोगविपर्ययाणि, मोहादत्राज्ञो नित्यतां मन्यते। न किञ्चित् संसारे समुदितं ध्रुवमस्ति आत्मनो ज्ञानदर्शनोपयोगस्वभावादन्यदिति।'**[१]

**अस्येदं तात्पर्यम्–**

अयं शरीरेन्द्रियविषयोपभोगपरिभोगद्रव्यसमुदाय: जलबुद्बुद्वत् अनित्यस्वभावकोऽस्ति। अतैव चैतेषु रक्त: जिनमार्गे श्रद्धां न दधाति।

गर्भावस्थात आरभ्य जीवस्य यावत्य: विशेषावस्थास्तासु शरीरेन्द्रियादीनां सदा संयोगेन विप्रयोगेन चेदं ज्ञायते सर्वं विनश्वरमेति। वस्तुतस्तु स्वात्मन ऐतेभ्य: सर्वेभ्योऽपि भदोऽस्त्येव। यथोक्तम्–

**"परमट्ठेण दु आदा देवासुरमणुवरायविविहेहिं।**
**वदिरित्तो सो अप्पा सस्सदमिदि चितये णिच्चं।।"**[२] इति।

अर्थात् वस्तुत: आत्मस्वरूपं सदैव चिन्तयेत् यदयं देवासुरमनुष्यराजादिसमस्तविकल्परहित: ज्ञानस्वरूप: नित्यश्चेति।

**२. अशरणानुप्रेक्षा–** त्रिष्वपि लोकेषु मृत्यो: सकाशात् रक्षितुं मणिमन्त्रतन्त्रौषधादि न किमप्यलं भवति। यद्यपि स्वर्गगता देवा अमरा: कथ्यन्ते तथापि तेषामायुरपि परिछिन्नमिति तेषां मरणमवश्यमस्त्येव। एतादृशरीत्या वारं वारं चिन्तनं तथा च धर्मातिरिकतं न किञ्चिदपि शरणमस्तीति चिन्तनमेव अशरणानुप्रेक्षा इत्युच्यते। कुदकुन्दाचार्या लिखन्ति यत्–

१. सर्वार्थसिद्धि ९/७/४१३

२. बारस अणुवेक्खा, गाथा। ७

**"मणिमंतोसहरक्खा हयगयरहयो य सयलविज्जाओ।**
**जीवाणं ण हि सरणं तिसु लोए मरणसमयम्हि।।"**[१] इति।

अस्यायं भावः—मरणकाले त्रिष्वपि लोकेषु मणिमन्त्रौषधानि, रक्षकः, अश्वः, राजा, रथः, यावत्यो विद्याः केऽपि प्राणिनां रक्षां कर्तुं न प्रभवन्ति। अतस्ते अशरणाः। आत्मानमेव शरणं प्रतिपादयन्तः कुन्दकुन्दचार्याः पुनर्लिखन्ति यत्—

**"जाइजरामरणरोगभयदो रक्खेदि अप्पणो अप्पा।**
**जम्हा आदा सरणं बंधोदयसत्तकम्मवदिरित्तो।।"**[२]

तथा हि जन्मजरामरणरोगभयादिभ्यः आत्मैव आत्मनो रक्षां करोति। अतः यः कर्मबन्धात् उदयात् सत्तावस्थातश्चातिरिक्त आत्मा स एवांत्र शरणम्। आत्मानमतिरिच्य न कोऽप्यन्यो रक्षकोऽस्ति। अयमात्मा स्वयमेव कर्माणि नाशयित्वा जन्मजरामरणादिभ्यः स्वयं मुक्तो भवति।

**३. संसारानुप्रेक्षा—** अयं जीवः संसारे चतुर्गतिरूपं परिभ्रमणं कुर्वन् कर्मणामुदयेन रङ्गमञ्चा—धिष्ठिता— भिनेतृवदनेकरूपाणि धरति। यस्य कस्यापि जीवस्य पिता भूत्वा तस्यैव जीवस्य पुनः कदाचित् भ्राता, पुत्रः पौत्रो वा भूत्वा जायते। कस्यापि जीवस्य स्वामी भूत्वा पुनश्च कालान्तरे तस्यैव जीवस्य सेवकोऽपि भवति। एवं संसारस्य जन्ममरणाकुलस्य, स्वभावस्य पुनः पुनरनुचिन्तनमेव संसारानुप्रेक्षा। एतद्विषये कुन्दकुन्दाचार्याः —

**"पंचविहे संसारे जाइजरामरण रोग भयपउरे।**
**जिणमग्गमपेछंतो जीवो परिभमदि चिरकालं।।"**[३]

अस्यायं भावः— अयञ्जीवः जिनमार्गे न वहति। अत एव जन्मजरामरणरोगभयादिभिः पञ्चसंसारप्रकारैः व्याकुलितोऽनादिकालादितस्ततः विचरतीति। पूज्यपादाचार्यस्तु स्वग्रन्थे लिखन्ति—'**कर्मविपाकवशादात्मनो भवान्तरावाप्तिः संसारः। स पुरस्तात्पञ्चविध परिवर्तनरूपेण व्याख्यातः। तस्मिन्ननेकयोनिकुल—कोटिबहुशतसहस्रसङ्कटे संसारे परिभ्रमन् जीवः कर्मयन्त्रप्रेरितः पिता भूत्वा भ्राता पुत्रः पौत्रश्च भवति। माता भूत्वा भगिनी भार्या दुहिता च भवति। स्वामी भूत्वा दासो भवति। दासो भूत्वा स्वाम्यपि भवति। नष्ट इव रङ्गे अथवा किं बहुना, स्वयमात्मनः पुत्रो भवतीत्येवमादिसंसारस्वभावचिन्तनमनुप्रेक्षा।**'[४] 'इति।

---

१. बारस अणुवेक्खा, गाथा। ८
२. बारस अणुवेक्खा, गाथा। ११
३. बारस अणुवेक्खा, गाथा। २४
४. सर्वार्थसिद्धि, ९/७/४१५

निश्चयदृष्ट्या कुन्दकुन्दाचार्याः सुनिश्चयन्ति यत्—

**"कम्मणिमित्तं जीवो हिंडदि संसारघोरकांतारे।**
**जीवस्स ण संसारो णिच्चयणयकम्मणिम्मुक्को।।"**[१] इति।

अर्थाद् यद्यपि जीवोऽयं स्वकर्मवशाद् संसाराख्ये बृहत्कानने मार्गमलब्ध्वा भ्रमति, तथापि स निश्चयनयेन कर्मरहित एव। अतः भ्रमणरूपेण संसारेण सहास्य न कोऽपि सम्बन्धोऽस्ति।

**४. एकत्वानुप्रेक्षा—** जगत्यस्मिन् 'अहमेकाकी एवोत्पन्नोऽस्मि' 'एकाकी एव म्रिये' 'कर्मणामुपार्जनं करोमि' पुनश्च तेषां फलरूपो भोगो मया एकाकिनैवोपभुज्यते। मम कोऽपि स्वजनः परिजनो वा मामस्माज्जन्ममरणादिरूपसंसारावर्तात् न दूरं कर्तुं शक्नोति। यदि कश्चन सहायकः एतज्जन्मनि भवान्तरे च मम स्याद् तर्हि स धर्म एव— इत्येवं वारं वारं चिन्तनमेवैकत्वानुप्रेक्षा। एतद्विषये पूज्यपादाचार्याणामिदं वचनमस्ति यत्— **जन्मजरामरणावृत्तिमहादुःखानुभवनं प्रति एक एवाहं न कश्चिन्मे स्वः परो वा विद्यते एक एव जायेऽहम्। एक एव म्रिये न मे कश्चित् स्वजनः परजनो वा व्याधिजरामरणादीनि दुःखान्यपहरति। बन्धुमित्राणि श्मशानं नातिवर्तन्ते धर्म एव मे सहायः सदा अनपायीति चिन्तनमेकत्वानुप्रेक्षा।'**[२] इति।

निश्चयदृष्ट्या आचार्याः शिवार्याः लिखन्ति यत्—

**"जो पुण धम्मो जीवेण कदो सम्मत्त चरणसुदमइयो।**
**सो परलोए जीवस्स होइ गुणकारकसहाओ।।**

**बद्धस्य बंधणे वा ण रागो देहम्मि होइ णाणिस्स।**
**विससरिसेसुण रागो अत्थेसु महाभयेसु तहा।।"**[३] इति।

अस्यायमभिप्रायः—सम्यक्दर्शनसम्यक्ज्ञानसम्यक्चारित्र्यरूपः रत्नत्रयधर्मो यो, जीवेन धृतः स एवैतल्लोके कल्याणप्रदः अस्य सहायको भवति। यथा रज्ज्वा बद्धः पुरुषः रज्जौ न सक्तः तथैव ज्ञानी अपि स्वबन्धनात्मके शरीरे एवमेव विषवद्दुःखदायके महाभयप्रदायकेऽर्थेऽपि न सज्जते।

**५. अन्यत्वानुप्रेक्षा—** आत्मा शरीराद्भिन्नः इति पुनः पुनरनुचिन्तनमन्यत्वानुप्रेक्षा।। आचार्याः कुन्दकुन्दा निरूपयन्ति यत्—

**"मादापिदरसहोदर पुत्तकलत्तादिबंधुसंदोहो।**
**जीवस्स ण संबंधो णियकज्जवसेण वट्टंति।।"**[४]

१. बारस अणुवेक्खा, गाथा। ३७
२. सर्वार्थसिद्धि, ९/७/४१५
३. भगवती आराधना, गाथा। १७५२—५३
४. बारस अणुवेक्खा, गाथा। २१

माता पिता भ्राता पुत्रः कलत्रमित्यादि बन्धुजनानां समूहः स्वकार्यसिद्ध्यै सम्बन्धं स्थापयन्ति। यथार्थतस्तु जीवस्यैभिः सह न कोपि सम्बन्धोऽस्ति। अतः सर्वे जीवाः अन्येभ्यः पृथगेव।

**"अण्णं इमं सरीरादिगं पि जं होई बाहिरं दव्वं।**
**णाणं दंसणमादा एवं चिंतेहि अण्णत्तं।।"**[१] इति।

शरीरादिकं यत् बहिर्द्रव्यमस्ति तत्सर्वं स्वस्माद्भिन्नमेव। अहन्तु ज्ञानदर्शनस्वरूप एव–इतिरीत्या अन्यत्वभावनया चिन्तनं कुर्यात्।

**६. अशुचित्वानुप्रेक्षा–** इदं शरीरमत्यन्तमपवित्रमस्ति। स्नानेन सुगन्धद्रव्याणां लेपनेन वाऽस्य मलिनता दूरीकर्तुं न पार्यते। किन्तु जीवः रत्नत्रयभावनया शरीराद्भिन्ने स्वात्मनि शुचित्वं पवित्रताञ्च प्रकटीकर्तुं शक्नोति। एवं शरीरादीनामशुचित्वभावनाया अनुसन्धानमशुचित्वानुप्रेक्षा। भगवती आराधना इति नामके ग्रन्थे आचार्याः शिवार्याः निगदन्ति यत्–

**"असुहा अत्था कामा य हुंति देहो य सव्वमणुयाणां।**
**एओ चेव सुभो णवरि सव्वसोवखायरो धम्मो।।"**[२] इति।

अस्यार्थस्तु अर्थकामरूपपुरुषार्थद्वयं सर्वेषां मनुष्याणां शरीराणि चाशुभानि सन्ति। एक एव तु धर्मः शुभरूपोऽस्ति यः सर्वं सौख्यं प्रददाति।

कुन्दकुन्दाचार्याः अभिप्रयन्ति यत्–

**"दुग्गंधं वीभत्वं कलिमलभरिवं अचेयणा सुत्तं।**
**सडण पडण सहावं देहं इदि चिंतये णिच्चं।।"**[३] इति।

अस्य तात्पर्यमेवमस्ति। अयं देहः दुर्गन्धमयः, मलमूत्रादिभरितः ततश्च बीभत्सः, जडः, दृश्यः, एवं विनाशी चास्ति। एवं सततं चिन्तनं कार्यम्।

**"देहादो वदिरित्तो कम्मविरहिओ अणंतसुहणिलयो।**
**चोक्खो हवेइ अप्पा इदि णिच्चं भावणं कुज्जा।।"**[४]

वस्तुतस्तु आत्मा देहातिरिक्तः कर्मरहितऽनन्तसुखानामाश्रयः। तस्माच्च शुद्धः– एवं रीत्या निरन्तरमनुचिन्तयेत्।

---

१. बारस अणुवेक्खा, गाथा। २३
२. भगवती आराधना, गाथा। १८१३
३. बारस अणुवेक्खा, गाथा। ४४
४. बारस अणुवेक्खा, गाथा। ४६

